Government Oriental Library Series.

BIBLIOTHECA SANSKRITA—No. 27.

# तैत्तिरीयारण्यकम्.

## भट्टभास्करमिश्रविरचितभाष्यसहितम्.



THE

# TAITTIRÍYA ÁRAṆYAKA

OF THE

## KRISHṆA-YAJUR-VEDA.

WITH THE

COMMENTARY OF BHAṬṬABHASKARAMIŚRA.

**Vol. II.**

( Prapaṭhakas 5 to 6 )

EDITED BY

A. MAHA'DEVA S'A'STRI, B. A.,
*Curator, Government Oriental Library, Mysore,*

AND

PANDITARATNAM K. RANGA'CHA'RYA,
*First Pandit, Government Oriental Library, Mysore.*

Published under the Authority of the Government of
His Highness the Maharaja of Mysore.

MYSORE:

PRINTED AT THE GOVERNMENT BRANCH PRESS.

1902.

# विषयानुक्रमणिका.

पञ्चमः प्रपाठकः. (अनु.)



षष्ठः प्रपाठकः.

श्रीः

# तैत्तिरीयोपनिषत्प्रारम्भः

॥ हरिः ओम् ॥

[1]शं नो॑ मि॒त्रश्शं वरु॑णः । शं नो॑ भवत्वर्य॒मा ।

---

[1]अथ रहस्यविद्या प्रस्तूयते । ब्रह्मज्ञानं प्रधानमत्रोपदिश्यते । सर्वकामावाप्तिरपवर्गश्च तस्य फलम्, 'सोऽश्नुते सर्वान् कामान् सह '* इति श्रवणात् । परार्थत्वात् फलश्रुतिरर्थवाद इति चेन्न । परार्थत्वाभावात् । नन्विदमस्ति 'आत्मा वा अरे द्रष्टव्यः '† इत्यादि । तत्रेयं स्तुतिः फलस्य विधायिका स्यात् । प्रकरणाद्यभावे[1] कथमस्याः तादर्थ्यमिति चेन्न । सर्ववेदान्तप्रत्ययानां ऐकविद्यात् । मैवम् । उपासनादिभेदेन विद्यानां भिन्नत्वात् । न चाङ्गभावः, नानाप्रकरणस्थत्वात् । अत एव न कर्माङ्गं ज्ञानम् । न चाधानवत् उपकारकत्वं स्यात् । न, मध्यस्थोपकारकाभावात् । ज्ञानस्य च पुरुषसंस्काररूपत्वात् न माध्यस्थ्यम् । न च विदुषा कर्तव्यमितिवत् पुरुषसंस्काररूपस्य ज्ञानस्य क्रतूपकारकत्वकल्पना स्यात् । युक्तं कर्माङ्गानां याथार्थ्यवेदनं क्रतुफलभावनायामुपकरोतीति तेषामुद्भूतिहेतुत्वेन

---

*उ. २-१.  †बृह. ४-४-५.  [1]प्रकरणेऽस्याभावे.

शं न इन्द्रो बृहस्पतिः। शं नो विष्णुरुरुक्रमः। [2]नमो

तस्याविरोधात् । आत्मज्ञानेन तु सर्वार्थप्रत्यस्तमयहेतुना न क्रतुफलभावनायामुपकारः । न च सूत्रकाराः कर्माङ्गत्वेनोपदिशन्ति । सर्वे चाश्रमिणोऽत्राधिक्रियन्ते । तस्मात् स्वतन्त्रोऽयं पुरुषसंस्कारः । तत्र 'ब्रह्मविदाप्नोति परम्'* इत्यादिना ब्रह्मस्वरूपमुपासनं तत्फलं चोपदिशति । इतरथा सत्यत्वादिगुणविशिष्टतया आत्मनो ज्ञानं कथमुपपद्यते । अपि चात्मनोऽसिद्धत्वात् 'अपितरि पितरं जानीहि' इतिवत् अनात्मन्यात्मज्ञानविधानगपि स्यात् । तथा हि—अयुक्ता हि देहमेवात्मानं मन्यन्ते । युक्तानां तु उपसंहृतसर्वार्थानां न द्रष्टृद्रष्टव्यदर्शनविभागोन्मेषः । तस्मात्सच्चिदानन्दात्मनो ब्रह्मण उपनिषद्भ्य एव सिद्धिरित्यौपनिषदं काण्डमारभ्यते । परस्य श्रेयसस्समीपे निषीदन्तीति उपनिषदः परप्राप्तिहेतवो विद्याः। ताश्च तिस्रो भवन्ति—सांहित्यो याज्ञिक्यो वारुण्यश्चेति । आधिलौकिक्यादिपञ्चमहासंहिताभावनाप्रधानाः सांहित्यः 'शं नो मित्रः' इत्यारभ्य द्वादशानुवाकाः । एतत्काण्डसमाननामानः काण्डदेवता अपि सांहित्य उपनिषदः उच्यन्ते। 'सह नाववतु'* इत्याद्याः त्रयोऽनुवाकाः वारुण्य उपनिषदः वरुणनाम्ना ऋषिणा स्वपुत्रं प्रति प्रोक्ताः । देवताश्च तत्सनाम्न्यः। 'अम्भस्य पारे'[1] इत्यारभ्य समस्तः प्रश्नो याज्ञिक्य उपनिषदः यज्ञनाम्ना[2] भगवता नारायणेन दृष्टाः । पूर्ववत् तत्सनाम्न्यो देवताः ॥

तत्र ब्रह्माध्येष्यमाणः प्रथमं तत्प्रत्यूहशान्तिं प्रार्थयते—

*उ. ९-१. [1]याज्ञिकी. १. [2]यज्ञात्मना.

**ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वा*मेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु ।**

**शं न इति** ॥ समस्तोऽयमनुवाको मन्त्रः । मित्रावरुणौ प्रसिद्धौ । **शं** सुखं तस्य भावयिता हेतुः **मित्रः नः** अस्माकं आचार्यस्य ब्रह्मचारिणां च भवतु । **वरुणश्च** सुखहेतुर्भवतु । अविघ्नेनाध्ययनसम्पत्तिः सुखम् । अत्र 'मित्रोऽहरजनयद्वरुणो रात्रिम्'† इति ताभ्यां तत्कार्ययोरहोरात्रयोः सुखं प्रार्थयते । एवं अर्यमादयोऽपि अस्माकं सुखहेतवो भवन्तु । **अर्यमा** आदित्यः कर्मणामीश्वरः अन्तर्यामी वा । छान्दसो वर्णलोपः । **इन्द्रः** यागेश्वरः । **बृहस्पतिः** ज्ञानेश्वरः । **विष्णुः** व्यापी विश्वस्याधारः **उरुक्रमः** महाक्रमणः विश्वव्यापित्वात् । एवं इयमनुष्टुप् ॥

[2]अतः परं यजुः—**नमो ब्रह्मणे** परस्मै अविशेषात्सर्वोत्तीर्णाय येन विना तृणाग्रमपि न चलति । हे **वायो! ते** तुभ्यं **नमः** । वायूधीनाभिव्यक्तित्वात् वेदात्मशब्दो वायुरुच्यते । प्रत्यक्षकृतत्वाय त इति युष्मच्छब्दोपादानम् । **त्वमेव ब्रह्मासि** तदनुरक्ततया तद्भावः । तदेवाह—**त्वमेव प्रत्यक्षं ब्रह्म** अस्माकं शब्दब्रह्मासि येन तत्परं विश्वं प्रेरयति । तस्मात्तादृशं **त्वां** अहं **वदिष्यामि** । त्वमपि मे शं भवेति शेषः । ततस्सुखमेव नस्सर्वत्रेति वा । मनोवाक्कायकर्मभिः तथ्यं **ऋतम्** । वाक्कर्मभ्यां तथ्यं **सत्यम्** । उभयोरुपादानमादरार्थम् । वाक्कर्मभ्यां मिथ्यात्वस्य अवश्यपरिहार्यत्वज्ञापनार्थं वा । **तत्** तथा उद्य-

*त्वमेव. †सं. ६-४-८.

अवंतु माम् । अवंतु वक्तारम् । ओं शान्तिश्शान्ति-श्शान्तिः ॥ १ ॥

सत्यं वंदिष्यामि पञ्च च ॥ १ ॥

[1]शीक्षां व्याख्यास्यामः । वर्णस्स्वरः । मात्रा

---

मानं ब्रह्म मामवतु । रक्षतु मिथ्याध्यापयितुराचार्यस्य त्याज्यत्वात् । शिष्यस्तु मिथ्याध्यायी नैव सिद्धिमृच्छति । मिथ्याधीतप्रायश्चित्तश्रवणाच्च । तत् तथा उद्यमानं वक्तारं च मां अवतु तर्पयतु अनुप्रविशतु वा । यद्वा—वक्तृत्वमाचार्यत्वं मामवतु स्थापयतु वा । उक्तं वदनकाले मां रक्षत्विति ; इदानीं सर्वदा अवनं प्रार्थयते—अवतु मां सर्वदा अवदनकालेऽपि। अवतु वक्तारमपि सर्वदा । वक्तृत्वमाचार्यत्वम् । सर्वदा शान्तिः सुखं प्रत्यूहशमनं वा । अस्त्विति शेषः । आदरार्थं पुनः पाठः; दार्ढ्यार्थं वा ॥

इत्यारण्यके पञ्चमप्रपाठके उपनिषत्सु प्रथमोऽनुवाकः.

---

अथाध्ययनस्य वर्णापचारादिदुष्टस्याभिमतार्थसाधकत्वाभावस्य 'मन्त्रो हीनस्स्वरतो वर्णतो वा '* इत्यादिषु प्रसिद्धत्वात् दोषो यत्नेन परिहार्य इति वर्णाद्यनुशासनं शिक्षाशास्त्रं अवसरे अवधानार्थं स्मारयति—शीक्षामित्यादि ॥ ऐकमत्यप्रकार आरुणकेतुकवदत्रापि द्रष्टव्यः । शिक्ष्यन्ते ज्ञानेनोपादीयन्ते वर्णादयोऽन-

---

*पाणिनीयशिक्षा. ५२.

येति शिक्षा शिक्षार्थसङ्ग्रहाध्यायः । शिक्ष विद्योपादाने, 'गुरोश्च हलः' इति अकारप्रत्ययः; छान्दसं दीर्घत्वम् । तामिमां **व्याख्यास्यामः** विशेषेण मर्यादया च प्रब्रूमः । यद्वा—शिक्षाख्यं पञ्चमं वेदाङ्गं विशेषेण ब्रह्मविद्याध्ययनसाधनत्वेनाचक्ष्महे । वर्णादयो यथावद्येन ज्ञातव्या इत्येष शिक्षाध्यायार्थस्सङ्ग्रहेणास्माभिरुक्तः । **वर्णः** अकारादिः । जातावेकवचनम् । आहुश्च—

**त्रिषष्टिश्चतुष्षष्टिर्वा वर्णाश्शम्भुमते मताः ।**
**प्राकृते संस्कृते चापि स्वयम्प्रोक्तास्स्वयम्भुवा ॥**
**स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः ।**
**यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमास्स्मृताः ॥**
**अनुस्वारो विसर्गश्च ≍क≍पौ चापि पराश्रयौ ।**
**दुस्पृष्टश्चेति विज्ञेया ऌकारः प्लुत एव च ॥***

इति । स्वराः उदात्तादयो वर्णधर्माः स्थानविशेषनिबन्धना ध्वनिभेदाः चत्वारः । सप्तेत्यन्ये उदात्तानुदात्तस्वरितप्रचयसन्नतरोच्चतरैकश्रुतयः । अथोदात्तादियोगविशेषनिबन्धना अन्ये सप्त स्वराः क्षैप्रनित्यप्रातिहताभिनिहतप्रश्लिष्टपादवृत्ततैरोव्यञ्जनानि । अथ क्षैप्रादियोगभेदनिबन्धनास्त्रयस्स्वराः दृढतरो मृदुतरोऽल्पतरश्चेति । **मात्रा** उच्चारणक्रियाकालस्येयत्ता । यथा—पादमात्रा[1] लघुर्गुरुश्च इति । आहुश्च—

**यद्व्यञ्जनान्तं यदु चापि दीर्घं**
**संयोगपूर्वं च तथाऽनुनासिकम् ॥**
**एतानि सर्वाणि गुरूणि विद्यात्**
**शेषाण्यतोऽन्यानि तथा लघूनि ॥***

*पाणिनिशि. ३-५.  *प्रा. २२-१४.  [1]पादमात्रा अर्धमात्रा.

तथा—'ऋग्विरामः पदविरामो विवृत्ति[1]विरामस्समानपदाविवृत्ति-विरामस्त्रिमात्रो द्विमात्र एकमात्रोऽर्धमात्र इत्यानुपूर्व्येण'[2] । विवृत्तिः[1]पदद्वयस्यासन्धानम् । समानपदविवृत्तिः एकस्मिन् पदे वर्णयोरसन्धानं यथा—प्रउगमिति । वायोस्स्थानविशेषो बलं यद्वशेन वर्णविशेषाः तद्धर्मविशेषाश्चाविर्भवन्ति, यत्र स्थानकरणवैलक्षण्येन 'उपांशुध्वाननिमदोपब्दिमन्मन्द्रमध्यमताराणि'[3] इति स्थानानि[4] सप्त जायन्ते, तथा 'मन्द्रादिषु सप्तसप्त यमाः क्रुष्टप्रथमद्वितीयतृतीयचतुर्थमन्द्रातिस्वार्याः'[3] । एषां सत्यपि स्वरत्वे स्वरनिबन्धनत्वात् पूर्वत्र नोक्ताः । एते पूर्वपूर्वदीप्ताः ।

**द्वितीयः प्रथमः क्रुष्टः त्रयश्चाह्वारकस्वराः ।**
**मन्द्रादयो द्वितीयान्ताश्चत्वारस्तैत्तिरीयकाः ॥**[3]

नादश्वासघोषात्मकानि च अनुप्रदानानि बलनिबन्धनाः । उच्चारणे समता साम हानिवृत्तिः [द्रुतादिनिवृत्तिः] साम सान्त्वने, औणादिकः कनिन्प्रत्ययः । यथाऽऽहुः—

**क्रमविक्रमसम्पन्नां अद्रुतामविलम्बिताम् ।**
**नीचोच्चस्वरसम्पन्नां वदेद्वृत्तवतीं समाम्**[3] ॥

इति । स्वराणां उदात्तादीनां सन्निवेशविशेषौ क्रमविक्रमौ । **सन्तानः** संहिता । 'चतस्रस्संहिताः पदसंहिताऽक्षरसंहिता वर्णसंहिताऽङ्गसंहिता च'[5] इति । अत्राहुः—

**गुरुत्वं लघुता साम्यं ह्रस्वदीर्घप्लुतानि च ।**
**लोपागमविकाराश्च प्रकृतिर्विक्रमः क्रमः ॥**

[1]वृत्ति. [2]प्रा. २-१०. [3]प्रा. २-११. [4]पदस्थानानि. [5]प्रा. २-१२.

**बलम् । साम सन्तानः । इत्युक्तश्शीक्षाध्यायः ॥२॥**

**शीक्षां पञ्च ॥ २ ॥**

[1]**सह नौ यशः । सह नौ ब्रह्मवर्चसम् ।** [2]**अथात-**

---

**स्वरितोदात्तनीचत्वं श्वासो नादोऽङ्गमेव च ।**
**एतत्सर्वं तु विज्ञेयं छन्दोभाषामधीयताम् ॥***

इति । वर्णादिषट्कोपादानस्य उपलक्षणार्थत्वात् सर्वमिदं सङ्गृहीतम्—

**पदक्रमविशेषज्ञो वर्णक्रमविचक्षणः ।**
**स्वरमात्राविभागज्ञो गच्छेदाचार्यसंसदम् ॥***

इति । आचार्या व्यासप्रभृतयः । तेषां सदनं ब्रह्मलोकः । एवं वर्णादीनां याथात्म्यं ज्ञात्वा यस्तथाऽध्यापयति अधीते वा स ब्रह्मणस्सालोक्यं सायुज्यं च गच्छति । इति शीक्षाध्यायार्थः अस्माभिः उक्त इति । एवमत्र वर्णादिविशेषाणां तत्फलस्य चानुपदेशात् सर्वं शिक्षाशास्त्रे ज्ञातव्यम् । तस्या अवसरे स्मरणमात्रं कृतमस्माभिरिति भावः ॥

इत्यारण्यके पञ्चमप्रपाठके उपनिषत्सु द्वितीयोऽनुवाकः.

---

[1]सह नौ यश इति मन्त्रशिष्याचार्ययोः शान्त्यर्थः । नौ आवयोः सह यशश्च ब्रह्मवर्चसं चास्तु अविगुणस्वाध्यायानुष्ठानेन शमदमादिलाभेन महाफलसम्पत्त्या च ॥

[2]अथात इत्यादि ब्राह्मणं वक्ष्यमाणविद्याध्ययनाङ्गभूतभावनावि-

---

*प्रा. २-१२.

**स्सꣳहिताया उपनिषदं व्याख्यास्यामः । पञ्चस्व-धिकरणेषु । अधिलोकमधिज्यौतिषमधिविद्यम-धिप्रजमध्यात्मम् । ता महासꣳहिता इत्याचक्षते । [3]अथाधिलोकम् । पृथिवी पूर्वरूपम् । द्यौरुत्तररू-**

---

शेषविधानार्थम् । केचिदाहुः—पूर्वानुवाकोक्तस्य सन्तानस्यै[1]वायं प्रपञ्च इति । अपरे तन्न सहन्ते ; जपान्त [फलान्तर] विधानात्, अथात इत्या-रम्भान्तरभावाच्च भावनाविधानमिदमर्थान्तरमेवेति । अत्राथशब्दः आनन्तर्यं द्योतयत् विद्यापरिकर्मस्था[2]नीयानां अध्ययनगुणादीनाम-नन्तरवृत्तत्वं प्रतिपादयतीति तेषामेव विद्याधिगमनहेतुत्वं अतश्श-ब्दो द्योतयति । सन्तानस्वरूपभावना संहिता । तस्याः **संहि-तायाः** प्रतिपादिकां **उपनिषदं व्याख्यास्यामः** विशेषेण आ-चक्ष्महे । परसिद्धिसमीपे निषीदतीत्युपनिषत् । 'सत्सूद्विष' इति-क्विप् । **पञ्चस्वधिकरणेषु** अधिष्ठानेषु । भावनाया अधिष्ठानानि पञ्च लोकादयः । तेषु सन्धीयमानेषु वर्णसंहिता भाव्यते । तत्रैकै-व[3]अधिकरणभेदेन पञ्चधा भिन्नत्वात् पञ्च संहिताः । प्रशस्त-त्वात् महासंहिताः । 'सन्महत्' इति समासः । **अधिलो-कमिति** । 'अव्ययं विभक्ति' इत्यादिना विभक्त्यर्थे अव्ययी-भावः । एवं सर्वत्र । लोकादिष्वित्यर्थः । तेन पञ्चस्वधिकरणे-षु इत्यनेन सामानाधिकरण्यम् ॥

[3]**अथाधिलोकं** अधिलोकं यां संहिता तां तावत् ब्रूमः । **पृथि-वीत्याद** ॥ अध्ययनकाले येन वेदवर्णौ संधीयेते सहोच्चार्येते तयोः **पूर्वरूपं पृथिवी** भूमिः । **उत्तररूपं द्यौः** द्युलोको वेदि-

---

[1]अविगुणस्यै. [2]नमस्स्था. [3]कैव पदसंहिता.

पम् । आकाशस्सन्धिः ॥ ३ । वायुस्सन्धानम् । इत्यधिलोकम् । [4]अथाधिज्यौतिषम् । अग्निः पूर्वरूपम् । आदित्य उत्तररूपम् । आपस्सन्धिः । वैद्युतस्सन्धानम् । इत्यधिज्यौतिषम् । [5]अथाधिविद्यम् । आचार्यः पूर्वरूपम् ॥ ४ ॥ अन्तेवास्युत्तररूपम् । विद्या सन्धिः । प्रवचनꣳ सन्धानम् । इत्यं-

---

तव्यः । तयोर्वर्णयोः सन्धिः अन्तराळम् । स **आकाशः** वेदितव्यः । सन्धानं पूर्वोत्तरयोः सहोच्चारणार्थो यत्नः । स **वायुः** वेदितव्यः । किं कृतं भवति ? पूर्वोत्तरयोर्वर्णयोरन्तराळकालनियमः कृतो भवति । द्युपृथिव्योर्यावद्व्यवधानान्तराळो भवत्याकाशः यावत्संक्षेपसंहिते द्यावापृथिव्यौ वायुस्सन्दधाति तादृशान्तराळसन्धानौ पूर्वोत्तरवर्णौ भाव्यौ । सहोच्चारणप्रयत्नजनककालाधिककालनिवृत्तिः कृता भवति । नियतावस्थत्वात् लोकानां नियन्तव्यत्वेन सन्धेः प्राधान्यात् तेन संहिता व्यपदिश्यते ॥

[4]**अथाधिज्यौतिषमिति** ॥ ज्योतिषोऽग्नेरुत्पन्ना आपो ज्योतिश्शब्देनोच्यन्ते ।

**अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपातिष्ठते ।**
**आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥***

इति पूर्वोत्तरत्वमग्न्यादित्ययोः । वैद्युतोऽग्निः वृष्टिमुत्पादयति ।

[5]**अथाधिविद्यमिति** ॥ आचार्यान्तेवासिनोः पूर्वोत्तरत्वं स्पष्टम् **विद्या** वेदः । **प्रवचनं** अध्यापनम् ।

---

*मनुस्मृ. ३-७६.

धिविद्यम् । [6]अथाधिप्रजम् । माता पूर्वरूपम् । पितोत्तररूपम् । प्रजा सन्धिः । प्रजननꣳ सन्धानम् । इत्यधिप्रजम् ॥ ५ ॥ [7]अथाध्यात्मम् । अधरा हनुः पूर्वरूपम् । उत्तरा हनुरुत्तररूपम् । वाक्सन्धिः । जिह्वा सन्धानम् । इत्यध्यात्मम् । इतीमा महासꣳहिताः । [8]य एवमेता महासꣳहिता व्याख्याता वेद । सन्धीयते प्रजया पशुभिः । ब्रह्मवर्चसेनान्नाद्येन सुवर्ग्येण लोकेन ॥ ६ ॥

सन्धिराचार्यः पूर्वरूपमित्यधिप्रजं लोकेन ॥३॥

---

[6]अथाधिप्रजमिति ॥ प्रजा निषिच्यमानं शुक्लम् । प्रजननं पुंव्यञ्जनम् ॥

[7]अथाध्यात्ममिति ॥ आस्यपर्यन्तप्रदेशा हनवः । अत्राधरोत्तरपर्यन्तौ गृह्येते । केचिदाहुः—भूगोळवशेनाधरा हनुर्दक्षिणा उत्तरा उत्तरेति । वागिन्द्रियसम्प्रयुक्त आत्मा वाक् । तेनाध्यात्ममित्युक्तम् ॥

[8]य एवमिति ॥ प्रजादिदृष्टफलसंस्तुतेरशान्त्यादिवत् नापवर्गार्थमिदमित्येके । तत्र ज्ञानमात्रे दृष्टफलदर्शनात् आफलप्राप्तेस्संहिताव्याख्यानमभ्यसनीयमिति । सन्धीयत इति । संहिता पूर्वरूपं व्याख्यानं प्रजादयो वेदनं सन्धानमिति ॥

इत्यारण्यके पञ्चमप्रपाठके उपनिषत्सु तृतीयोऽनुवाकः.

[1]यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्योऽध्यमृतात्सम्बभूव । स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देव धारणो भूयासम् । शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम् ।

---

[1]**यश्छन्दसामिति** ॥ मेधाजनने विनियुज्यते । मध्ये ज्योतिस्त्रिष्टुप् ततस्त्रिपदा गायत्री । शिष्टं यजुः । अत्र विद्याङ्गतया परस्य ब्रह्मणो वाचकः प्रणवः प्रस्तूयते । **यः छन्दसां** उत्कृत्यन्तानां अक्षरसंख्याविशेषात्मनां सर्ववाङ्मयव्यापिनां **ऋषभः** वर्षिता उत्पादकः बीजात्मनाऽवस्थितत्वात् सर्ववाङ्मयप्रधानभूतो वा ओङ्कारः **विश्वरूपः** शब्दब्रह्मतया विश्वात्मतया विवर्तमानः परमात्मनोऽवस्थाविशेषः **छन्दोभ्यः** देवेभ्यः **अमृतात्** । वचनव्यत्ययः । अमृतेभ्यः अविनश्वरेभ्यः । यद्वा—अमृतं परमाक्षरं तदात्मभ्यः तेभ्यो यः **अधिसम्बभूव** तेषां सारोऽक्षरात्मना व्यक्तिं गतः । अधिः अनर्थकः आधारत्वं वा द्योतयति । **स इन्द्रः** ऐश्वर्ययुक्तः मां **मेधया** परवस्तुसाक्षात्करणयोग्यया ग्रन्थार्थधारणशक्त्या **स्पृणोतु** प्रीणयतु । **देव**! देवनशील! **अमृतस्य** अमृतत्वप्राप्तिहेतोः तव **धारणः** धारयिता **भूयासम्** । नन्द्यादिर्द्रष्टव्यः । ततश्च तव धारणार्थं **मे** मम **शरीरं विचर्षणं** विशिष्टेन्द्रियकं भूयात् द्विप्रकाराण्यपीन्द्रियाणि विशिष्टशक्तिकानि भवन्तु । मम **जिह्वा** अपि **मधुमत्तमा** अतिशयेन मधुराऽध्ययनशालिनी भवतु । **कर्णाभ्यां** च **भूरि** बहुतरं तव प्रसादेन **विश्रुवं** विशेषेण शृणवानि सर्वविद्याश्रवणसमर्थे श्रोत्रे मे भूयास्ताम् । स त्वं **ब्रह्मणः** परमेश्वरस्य **कोशः**

**ब्रह्मणः कोशोऽसि मेधयाऽपिहितः । श्रुतं मे गोपाय । [2]आवहन्ती वितन्वाना ॥ ७ ॥ कुर्वाणा चीरमात्मनः । वासाꣳसि मम गावश्च । अन्नपाने च सर्वदा ।**

कोशस्थानीयः असि । त्वयि खलु वाचके ब्रह्म गुप्तं तिष्ठति । **मेधया** ज्ञानविशेषेण **अपिहितः** छादितः । ज्ञानविशेषस्य संसारिणामभावात् छादनहेतुत्वमुपचर्यते । यद्वा—मेधया पिहितः पूरितमेधामयः । यद्वा—मेधया पिधानस्थानीयया अपिहितः पिहितद्वारेण मधुघनस्थानीयोसि । अथ ब्रह्मणो विद्यायाः कोशोऽसि । स त्वं मे मम **श्रुतं गोपाय** रक्ष समृद्धं कुरु । यद्वा—श्रुतमधीतं गोपाय अस्कन्नं कुरु श्रुतसमृद्ध्यर्थं मेधां जनयित्वा उद्घाटितद्वारो भव, त्वयि पिहितद्वारे का नाम विद्यासिद्धिरिति । 'वष्टि वागुरिरल्लोपमवाप्योरुपसर्गयोः' इति पाक्षिकत्वाल्लोपाभावे 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वमाद्युदात्तत्वम् ॥

[2]आ वहन्तीति ॥ पुष्टचा [ष्टचादि] जननहोमे विनियुज्यते विद्याङ्गमेव[व वा] । प्रथमा षट्पदा जगती । तस्मिन्नित्यादि द्विपदा गायत्री । यथाप इत्यनुष्टुप् । शिष्टं यजुः । श्रीः प्रार्थ्यते—**आवहन्ती वितन्वाना** विस्तारयन्ती अथ[1] विस्तार्य **आत्मनः चीरं** चिरं दीर्घकालं कुर्वाणा यत्नेन लब्धानि तस्यैव स्वानि[2]-कुर्वाणा अविनष्टानि स्थापयन्ती । यद्वा—चिरमात्मनः कुर्वाणा आत्मसात्कुर्वाणा आत्मीयानि रक्षन्ती । व्यत्ययेन दीर्घत्वम् । कानि पुनस्तानीत्याह—**वासांसि** वस्त्राणि विचित्राणि **गावश्च**

[1]अपि. [2]तस्मिन्नेव स्वामिनि.

**ततो॑ मे॒ श्रिय॒माव॑ह । लो॒म॒शां प॒शुभि॑स्स॒ह स्वाहा॑ । [3]आ मा॑ यन्तु ब्रह्मचा॒रिण॒स्स्वाहा॑ । *विमा॑यन्तु ब्रह्मचा॒रिण॒स्स्वाहा॑ । प्रमा॑यन्तु ब्रह्मचा॒रिण॒स्स्वाहा॑ । दमा॑यन्तु ब्रह्मचा॒रिण॒स्स्वाहा॑ । शमा॑यन्तु ब्रह्मचा॒रिण॒स्स्वाहा॑ ॥ ८ ॥ यशो॒ जने॑ऽसानि॒ स्वाहा॑ ।**

गाः बहुप्रकाराः **अन्नपाने** च अदनीयं पानीयं च **सर्वदा** ममावहन्ती वितन्वाना कुर्वाणा च यस्मात्त्वमसि ततो हेतोः **मे** मम **श्रियं** महतीं विभूतिं **आवह** हे देवि! । कीदृशी-मित्याह—**लोमशां** क्षेत्रपुत्रादिबहुद्रव्यवतीं **पशुभिः सह** आवहेति । यद्वा—पशुभिर्लोमशां विचित्ररूपां श्रियं सह युगपत् आवह । **स्वाहा** हुतमिदं तवास्तु ॥

[3]अथ विभूत्यन्तरं प्रार्थयते—**ब्रह्मचारिणः** अन्तेवासिनः **मां आयन्तु** आचार्यत्वं मम सदा अस्तु । **जने** जनेषु मध्ये अहं **यशः** यशस्वी भूयासम् । मत्वर्थीयो लुप्यते । **श्रेयान्** प्रशस्यतरो भूयासं **वस्यसः** यो नाम कश्चित् वसीयान् वसुमत्तरः ततः प्रशस्यतरो भूयासम् । ईयसुन ईकारस्य छान्दसो लोपः । हे **भग**! भगवः! ऐश्वर्यवन्! यद्वा—हे श्रीः! भजनीयत्वात् भग! **तं त्वा** त्वामहं **प्रविशानि** भोक्तृत्वेन प्राप्नुवानि । हे **भग**! त्वमपि **मा** मां **प्रविश** भोक्तृत्वं ममानुजानीहि । हे भग! **त्वयि सहस्रशाखे** पापान्यपि **निमृजे** निमृज्मः त्वल्लाभेन पापकृत्यामपि क्षाळयामि ॥

*विमायन्त्वित्यादि वाक्यचतुष्टयं न व्याख्यातम्. न पठ्यते च कैश्चित् ।

श्रेयान् वस्यसोऽसानि स्वाहा । तं त्वा भग प्रविशानि स्वाहा । स मा भग प्रविश स्वाहा । तस्मिन्थ्सहस्रशाखे । नि भगाऽहं त्वयि मृजे स्वाहा । [4]यथाऽऽपः प्रवता यन्ति । यथा मासा अहर्जरम् । एवं मां ब्रह्मचारिणः । धातरायन्तु सर्वतस्स्वाहा । प्रतिवेशोऽसि प्र मा भाहि प्र मा पद्यस्व ॥ १ ॥

वितन्वाना शमायन्तु ब्रह्मचारिणस्स्वाहा
धातरायन्तु सर्वतस्स्वाहैकं च ॥४॥

भूर्भुवस्सुवरिति वा एतास्तिस्रो व्याहृतयः ।

---

[4]किञ्च—यथा आपः सलिलानि प्रवता प्रवणेन निम्नेन यन्ति शीघ्रं गच्छन्ति । 'उपसर्गाच्छन्दसि' इति वनिः । यथा च मासा अहर्जरं संवत्सरं यन्ति प्राप्नुवन्ति । अहानि जरयन्तीत्यहर्जरम् । एवमयत्नेन मां ब्रह्मचारिणः सर्वतः सर्वेणप्रकारेण आयन्तु आगच्छन्तु हे धातः! विश्वस्य धारक! भग! यस्मात्त्वमेवं मम प्रतिवेशोसि प्रत्यासन्नोसि । श्रमापनयनस्थानं प्रतिवेश इति केचित् । तस्मात् मा प्रभाहि प्रकर्षेण भातं ख्यातं कुरु । अन्तर्भावितण्यर्थो भातिः द्रष्टव्यः । तदर्थं मा मां प्रपद्यस्व प्रकर्षेण समीपे वर्तस्व मां मा मूमुचः ॥

इत्यारण्यके पञ्चमप्रपाठके उपनिषत्सु चतुर्थोऽनुवाकः.

---

[1]अथ व्याहृत्युपासनं परोपासनाङ्गं उपदिश्यते—भूरित्यादि ॥

**तासा॑मु ह स्मै॒ तां च॑तु॒र्थीम् । माहा॑चमस्यः॒ प्रवे॑दय-ते । मह॒ इति॑ । तद्ब्रह्म॑ । स आ॒त्मा । अङ्गा॑न्य॒न्या दे॒वताः॑ । [3]भूरिति॒ वा अ॒यं लो॒कः । भुव॒ इत्य॒न्तरि॑-क्षम् । सुव॒रित्य॒सौ लो॒कः ॥ १० ॥ मह॒ इत्या॑दि॒-**

व्यावृत्तमाह्रियते ब्रह्मादिभिरिति व्याहृतयः भूरादयश्शब्दाः 'स भूरिति व्याहरत्'* इत्यादिषु प्रसिद्धाः तद्वाच्या वा देवताः । ता एताः **तिस्रो व्याहृतयः** प्रसिद्धा एव ब्रह्मांशाः । **अथ एतां** वक्ष्यमाणां **तासामेव चतुर्थीं माहाचमस्यः** महाचमसस्यापत्यमृषिः **प्रवेदयते स्म** । गर्गादिलक्षणो यञ् ॥

[2]का पुनस्सेत्यत आह—**मह इति** ॥ एतां चतुर्थीं व्याहृतिं उपासनायोपदिशति प्राधान्येन माहाचमस्यः । यदाह—**मह इति । तद्ब्रह्म । स आत्मा । अङ्गान्यन्या देवता** इति ॥ चतुर्थ्यां ब्रह्माभिसन्धिः कर्तव्यः । अन्यासु तिसृषु तदङ्गाभिसन्धिः । देवताग्रहणेन ब्रह्मैव[1] कामरूपत्वाच्चतुर्धा स्थितमिति दर्शयति । स आत्मेति तस्यामेव चतुर्थ्यामात्मोपदेशः परस्य ब्रह्मणः तत्र ख्यापनार्थः । उपास्यमुपासकश्च सैवेति भावना विधीयते । केचिदाहुः—चतुर्थी व्याहृतिः परं ब्रह्म अङ्गि अनवच्छिन्नं शान्तं नि[2]मित्तात्मकं सर्वोपकारकम् । स एवात्मा विश्वोपादानम् । अन्या व्याहृतयः तस्याङ्गभूता देवताः तेनैव क्रियमाणाः लोकत्रयस्थाः सर्वा इति ॥

[3]इदानीं भावनाविशेषा उच्यन्ते । लोकाधिष्ठानदेवता त एव [व वा] व्याहृतिभावेन भावनीया व्याहृतयो वा तद्भावेन भ

*ब्रा. २-२-४. [1]ब्रह्मैव गृह्यते. [2]शान्तमनि.

त्यः । आदित्येन वाव सर्वे लोका महीयन्ते । [4]भूरिति वा अग्निः । भुव इति वायुः । सुवरित्यादित्यः । मह इति चन्द्रमाः । चन्द्रमसा वाव सर्वाणि ज्योतीꣳषि महीयन्ते । [5]भूरिति वा ऋचः । भुव इति सामानि । सुवरिति यजूꣳषि ॥ ११ ॥ मह इति ब्रह्म । ब्रह्मणा वाव सर्वे वेदा महीयन्ते । [6]भूरिति वै प्राणः । भुव इत्यपानः । सुवरिति व्यानः । मह इत्यन्नम् । अन्नेन वाव सर्वे प्राणा महीयन्ते ।

---

नीयाः । भवन्त्यस्मिन् भूतानीति भूः अधिकरणे क्विप् । भावयति विश्वमवकाशप्रदानेनेति भुवः । अन्तर्भावितण्यर्थादसुनि गुणाभावश्छान्दसः । सुष्ठु अरणीयमस्मिन् सुखमिति वाऽकर्तर्यपि व्यत्ययेन विच् । तन्वादित्वादुवङ् । महयाति विश्वं महीयते वा विश्वमनेनेति महः । औणादिकोसुन् । आदित्येन बोधकत्वात् सर्वेलोका उपक्रियन्ते । महीङ् कण्ड्वादिः ॥

[4]अमृतत्वाच्चन्द्रेण **सर्वाणि ज्योतींषि** उपक्रियन्ते । वायोः ज्योतिष्ट्वं तद्धेतुत्वात् ॥

[5]**ब्रह्मणा** ओङ्कारेण तादर्थ्यात्[1] **सर्वे वेदा** उपक्रियन्ते अविचलितं स्थाप्यन्ते यथा 'स्रवत्यनोंकृतं ब्रह्म'* इति ॥

[6]**अन्नेन सर्वे प्राणा** धारकत्वेन उपक्रियन्ते ॥

[7]**ता वा इत्यादि** ॥ यस्मादेवं तादृशा **एताश्चतस्रो व्याहृतयः चतुर्धा** भवन्ति लोकादिभावेन चतुर्धा वर्धन्ते । तस्मा-

---

[1]तादात्म्यात्. *मनु. २-७४.

[7]ता वा एताश्चतस्रश्चतुर्धा । चतस्रश्चतस्रो व्याहृतयः। ता यो वेद । स वेद ब्रह्म । सर्वेऽस्मै देवा बलिमावहन्ति ॥ १२ ॥

असौ लोको यजूꣳषि वेद द्वे च ॥५॥

[1]स य एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं पु-

---

त्सर्वा **व्याहृतयः चतस्रश्चतस्रः** प्रत्येकं चतस्रो भवन्ति । **ताः** तादृशीः प्रत्येकं चतुर्धा व्यवस्थिता व्याहृतीः **यो वेद** प्रभावनाप्रकर्षेण यथावज्जानाति **स ब्रह्म वेद** साक्षात्करोति तदुपायत्वादस्य ज्ञानस्य । ततो ब्रह्मीभूताय **अस्मै सर्वे** अपि **देवा**दयो **बलिं** पूजां **आवहन्ति** आभिमुख्येन प्रापयन्ति सर्वैराराध्यो भवति ॥

इत्यारण्यके पञ्चमप्रपाठके उपनिषत्सु पञ्चमोऽनुवाकः.

---

[1]इदानीं शिष्यं प्रति उपासनाविशेषमुपदिशति[1] आचार्यः—**स य एष** इत्यादि ॥ अत्रापि व्याहृतीनामेवोपासनं विधीयते । हृदये अन्तः अन्तर्हृदयम् । तत्र **अन्तर्हृदये** 'अव्ययं विभक्ति' इत्यादिना अधिकरणेऽव्ययीभावः । 'तृतीयासप्तम्योर्बहुलं' इत्यम्भावाभावः । स्वरान्यत्वं छान्दसम् । पञ्चमादारभ्यैकश्रुत्यम् । 'अधो निष्ट्या वितस्त्यां तु नाभ्यामुपरि तिष्ठति'* इति प्रसिद्धः स्थानविशेषो हृदयम् । तत्र य **एष आकाशः** अवकाशः । स एष इति प्रसि-

---

[1]उपासनामुपदिशति.

*याज्ञिकी. ११.

रुषो मनोमयः। अमृतो हिरण्मयः। [2]अन्तरेण तालुके। य एष स्तन इवावलम्बते। सेन्द्रयोनिः।

---

द्धतां सूचयति **तस्मिन्नयं पुरुषो मनोमयः** वर्तते। सर्वस्य स्वा[1]नुभवसिद्धत्वात् अयमिति निर्दिशति। मनोनाम सत्त्वपरिणामिद्रव्यविशेषः आहङ्कारिकः। तमधिष्ठाय वर्तमानः कश्चिदीश्वरांशो मनोमयः। पुरि वसतीति पुरुषः जीवः क्षेत्रज्ञ इति पर्यायाः। **अमृतः** ईश्वरगुणानामस्मिन्नाविर्भूतत्वात् अमरणः अविनाशः। अत एव **हिरण्मयः** प्रकाशरूपः। हितरमणीय इत्येके। अस्योपासनं वक्ष्यते। कश्चिदाह—अन्तर्हृदये आकाशे दहरात्मनि **य** एष आकाशः आकाशमानः प्रकाशमानः विज्ञानात्मा जीवः तस्मिन्नयं पुरुषो मनोमयः पुरुषः पूर्वोक्त ईश्वरांशः सूर्यापरनामाधिष्ठाय वर्तते स्वरूपेण प्रकाशते परमेश्वरस्थानीयः। अमृतो हिरण्मयः पूर्ववदीश्वरांशत्वात्॥

[2]एवमीश्वरस्थानमीश्वरं चोपदिश्य इदानीं तस्य निष्क्रमणमार्गं देवयानाख्यमुपासनाङ्गत्वेनोपदिशति—**अन्तरेण तालुके** तालुमध्ये **य एष स्तन इव** अधो **लम्बते** स्तनाकारोऽवयवविशेषः इन्द्रस्य जीवात्मन ईश्वरस्य **योनिः** निष्क्रमणस्थानं ततो योन्या निर्गच्छति। व्यापिनोऽप्युपासनार्थो निष्क्रमणोपदेशः। इदानीमुत्तरो मार्ग उपदिश्यते—**शीर्षकपाले व्यपोह्य** विभिद्य **असौ केशान्तः** केशान्ताख्यस्थानावधिकः। कश्च अश्च ईशश्च केशाः तेषामन्तः *ब्रह्मविष्णुरुद्राधिकारातीत इति केचित्। एष दिव्यः

---

[1]सर्वस्यानु.

यत्रा॒सौ के॑शा॒न्तो वि॒वर्त॑ते । व्य॒पोह्य॑ शीर्षकपा॒ले । [3]भूरि॒त्य॒ग्नौ प्रति॑तिष्ठति । भुव॒ इति॑ वा॒यौ ॥ १३ ॥ सुव॒रित्या॑दि॒त्ये । मह॒ इति॒ ब्रह्म॑णि । आ॒प्नोति॒

---

पन्थाः यत्र विवर्तते यत आरभ्य वितायते अनेन निर्गच्छेत्युपदेशः ॥

[3]ततो गुहाया निर्गत इवानावृतस्सन् **भूरित्यग्नौ प्रतितिष्ठति** भूरहमस्मीति भावयन् अग्निरूपेण व्याप्तमात्मानं भावयेत् । ततो भुवः अहमस्मीति भावयन् ततोधिकेन वायुरूपेण व्याप्तमात्मानं भावयेत् । ततस्सुवरहमस्मीति आदित्यरूपेणात्मानं भावयन् ततोधिकेनान्येन रूपेण व्याप्तमात्मानं भावयेत् । ततो महोऽहमस्मीति भावयन् परममहता ब्रह्मरूपेण व्याप्तमात्मानं भावयेत् । केचिदाहुः—पूर्वोक्तस्य व्याहृत्युपासनस्य इदं फलमिति । इन्द्रयोनेर्निर्गतस्य अग्न्यादिप्रतिष्ठा व्याहृत्युपासनेन प्रथमक्तेन सिद्धैवेति । अन्ये पुनराहुः—अग्निः जीवः । वायुः पुरुषः । आदित्यः परमाकाशः । ब्रह्म सच्चिदानन्दात्मकं निरञ्जनमनवच्छिन्नं परं वस्तु । ऐश्वर्यविशेषः प्रतिष्ठा । अथ ब्रह्मणि यदाऽयं प्रतिष्ठितो भवति तदा **स्वाराज्यं** निरतिशयं स्वातन्त्र्यं **आप्नोति** विगलिताशेषावरणत्वात् । **मनसस्पतिं** च **आप्नोति** मनोमयस्यात्मनः स्वामिनमंशिनं वा । यद्वा—मनसो विज्ञानरूपस्य पतिमधिष्ठातारमाप्नोति । ब्रह्मप्रतिष्ठास्तुत्या भाविश्रुत्या ब्रह्मप्रतिष्ठाभावनायाः फलमिदं मनसस्पतित्वावाप्तिः । ततस्तादृशे महिम्नि वर्तमानोऽयं वाक्पतिर्भवति वागिन्द्रियपतित्वं प्राप्नोति ।

**स्वाराज्यम् । आप्नोति मनसस्पतिम् । वाक्पति-श्चक्षुष्पतिः । श्रोत्रपतिर्विज्ञानपतिः । एतत्ततो**

वागिन्द्रियसाध्यस्य सकलवाङ्मयनिर्माणस्य स्वेच्छयैव सम्पत्तिः तदाधिपत्यम् । यद्वा—वागिन्द्रियसाध्यस्य कृत्स्नस्य सुखस्याय-त्तावाप्तिः वागिन्द्रियस्य स्वयमुत्पादकत्वं वागिन्द्रियवतां जीवानां आधिपत्यं वा । सर्वत्र 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वर-त्वम् । **चक्षुष्पतिः** च भवति चक्षुरिन्द्रियसाध्यस्य स्वेच्छानिर्मा-णादि पूर्ववत् । **श्रोत्रपति**श्च भवति । गतम् । **विज्ञानपति**श्च भवति युगपत् सर्वार्थज्ञानसामर्थ्यात् । समानमन्यत् । यदाऽयं मनसस्पतिमाप्त्वा तिष्ठति **ततः** तदनन्तरं **एतत्** विश्वं **आका-शशरीरं ब्रह्म** एव भवति नान्यत्किंचित्पश्यति । यद्वा—एत-दिति पुरुष उच्यते । ब्रह्मसमभिव्याहारात् नपुंसकत्वम् । एष पुरुषः क्षाळितसकलोपाधिमलः ब्रह्मैव संपद्यते । यद्वा—आका-शत इत्याकाशः परमात्मसंज्ञः प्रकाशविशेषः विश्वोपादानात्मा । तच्छरीरकं प्रकाशते ब्रह्म । अथ तदवस्थं ब्रह्म विशेष्यते—**सत्त्यात्म** सत् परं त्यत् अपरं तदुभयात्मकं सत्त्यात्म । यथा 'सच्च त्यच्चाभवत्'* इति । यद्वा—सत्यसङ्कल्पत्वात् सत्त्यात्मत्वम् । **प्राणारामं** प्राण एवारामो न बहिर्यस्य तत्प्राणारामम् । आ-त्मपर्यायः प्राणशब्दः; यथा आत्मवानयमिति प्राणवानुच्यते । यद्वा—प्राणाः प्राणनादयो व्यापारा आरमन्ति विरमन्त्यस्मा-दिति प्राणारामम् । **मनआनन्दं** मनस्येवानन्दो यस्य नेन्द्रि-यान्तरापेक्षम् । इदमेव लिङ्गं मुक्तात्मनामीश्वरस्य च मनोवि-

*उ. ६-६.

भवति । आकाशशरीरं ब्रह्म । सत्यात्म प्राणारामं मनआनन्दम् । शान्तिसमृद्धममृतम् । [4]इति

शेषोऽस्तीति । यद्वा—मनश्शब्देन ज्ञानमुच्यते; ज्ञानानन्दं ज्ञानमेवानन्दो यस्येति । शान्तिसमृद्धं शान्तिश्शिवत्वं तेन समृद्धं अनवच्छेदात् नित्यत्वात् 'तृतीयाकर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् ॥

[4]अथोपासना विधीयते । प्राचीनयोग्यं शिष्यं आचार्योऽनुशास्ति । पुत्रमित्येके—प्राचीनैरुक्तैरुपासनाङ्गैः योग्यत्वं यस्येति । सामग्रीप्रतिपादनार्थमिदम् । अन्य आह—प्राचीनयोग्यस्यापत्यमिति । गर्गादिलक्षणो यञ् । तत्पुत्रत्वमेव योग्यत्वमिति । उपास्वेति विधिः, तद्भावमुपेत्यासना उपासना । श्रुतिरेवोपासनां विधत्ते । प्राचीनयोग्यः उपासीतेत्युक्तं भवति । तत्र कथमित्याकाङ्क्षायां पूर्वोक्तं सामग्रीत्वेनाभिसम्बध्यते । तद्यथा कर्मशरीरयात्राऽविरुद्धे काले शुचौ देशे सुखोपविष्टो मित्रादिभ्यः शान्तिं प्रार्थ्य विद्याङ्गभूतवर्णादियाथात्म्यज्ञानमनुसन्धाय पञ्चाधिकरणमहासंहितापञ्चकयाथात्म्यज्ञानसमुपजातयोग्यताविशेषो भूत्वा मेधावित्वश्रीमन्त्वभावनाभ्यां सञ्जाततृप्तिविशेषस्सन् तिसृणां व्याहृतीनां व्याहृतित्वं तद्देवतानां च परस्य ब्रह्मणोऽङ्गत्वं च चतुर्थ्याश्च परब्रह्मस्वरूपत्वं आत्मत्वं चाभिसन्धाय लोकादिभावेन चतसृणां व्याहृतीनां चतुर्धाऽवस्थानं पर्यायेणाभिसन्धाय हृदयाकाशे मनोमयोऽमृतो हिरण्मय इति भावयित्वा स्तनाकृत्या योन्या निर्गत्य शिरःकपाले निर्दिष्टमध्वानमतिलङ्घ्य आवरणाद्विनिर्गतमात्मानं स्म-

प्राचीनयोग्योपास्व ॥ १४ ॥

वायावमृतमेकं च ॥ ६ ॥

[1]पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशाः । अग्निर्वायुरादित्यश्चन्द्रमा नक्षत्राणि । आप ओषधयो वनस्पतय आकाश आत्मा । इत्यधिभूतम् । [2]अथा-

रन्[1] अग्निवाय्वादित्यब्रह्मसु प्रतिष्ठातारं व्यापकमात्मानमनुसन्दधानो वाक्पतित्वादिभिर्विशेषणैः विशिष्टः परमेश्वराख्ये प्रतिष्ठितः मनसस्पतिमाप्तवानस्मीति भावयित्वा आकाशशरीरं सत्यात्मादिगुणं ब्रह्मास्मीत्यनुसन्दधीतेति । एवं यावज्जीवमुपासनमुच्यते ॥

इत्यारण्यके पञ्चमप्रपाठके उपनिषत्सु षष्ठोऽनुवाकः.

[1]इदानीं ध्यानविशेषमाह—**पृथिव्यन्तरिक्षमित्यादि** ॥ एतत्सर्वं व्याप्तं मयैवेति ज्ञानाय व्याप्यानि दर्शयति । पृथिव्यादयः पञ्चदश पदार्थाः त्रयः पञ्चकाः । **अधिभूतं** भूतेष्वधि भवतीति विभक्त्यर्थेऽव्ययीभावः । भूतानि भूतपरिणामाश्च एते त्रयः पञ्चकाः ॥

[2]**अथाध्यात्ममिति** ॥ आत्मा शरीरं तस्मिन्नधि **अध्यात्मं** पूर्ववदव्ययीभावः । 'अनश्च' इति टच् समासान्तः । प्राणादयः पञ्चदश पदार्थाः त्रयः पञ्चकाः अध्यात्मं भवति । पृथिव्यादयो लोकाः । दिशः प्राच्यादयः आदित्यगत्यधीनाः । **अवान्तरदिशाः** कोणदिशः । 'अच्' इति योगविभागादच् समासान्तः । अग्न्यादयः पृथिव्यादीनामधिपतयः । ओषधिग्रहणेन वीरुधो गृ-

[1]निर्गतमात्मानं ततः.

ध्यात्मम् । प्राणो व्यानोऽपान उदानस्समानः । चक्षुश्श्रोत्रं मनो वाक्त्वक् । चर्म माꣳसꣳ स्नावाऽस्थि मज्जा । [3]एतदधिविधाय ऋषिरवोचत् । पाङ्क्तं वा इदꣳ सर्वम् । पाङ्क्तेनैव पाङ्क्तꣳ स्पृणोतीति ॥ १५ ॥

सर्वमेकं च ॥ ७ ॥

ह्यन्ते । वनस्पतिग्रहणेन वृक्षा अपि गृह्यन्ते । आकाशगुणश्शब्दः । **आत्मा** जीवः । **प्राणः** मुखनासिकानिष्क्रमणः । **व्यानः** बलकर्मा अग्निमन्थनादिहेतुः । **अपानो**ऽधोवृत्तिः शब्दोच्चारणकर्मा । **उदानः** छर्दनादिकारी । आहारादिवीर्यं सर्वेष्वङ्गेषु सन्नतः **समानः** । चक्षुरादीन्यधिष्ठानव्यतिरिक्तानीन्द्रियाणि, अपक्रमणश्रुतेः । तत्र रूपग्रहणे **चक्षुः** । शब्दग्रहणे **श्रोत्रम्** । अध्यात्मेश्वरेणेन्द्रियकर्महेतुत्वं मनसः[1] । **वाक्** रसस्य ग्रहणे वदने च शब्दस्य । घ्राणस्याप्युपलक्षकम् । **त्वक्** स्पर्शग्रहणे । इन्द्रियस्यापि व्यापकसाहित्याय पृथग्वाक्यत्वम् । **स्नावा** बन्धनी सिरा । **मज्जा** अस्थ्नामन्तरास्थितं बलम् ॥

[3]एतत् पाङ्क्तं ज्ञानं **अधिविधाय** उपासनविध्यन्तमुक्त्वा पुनः **अवोचत् ऋषिः** वेदात्मा । **इदं सर्वं** विश्वं जगत् **पाङ्क्तं** पङ्क्तिरागतं न षड्भ्यचः ।[2] सुखदुःखादिव्यवस्थया चात्मनानात्वात् न यत्नवैयर्थ्यम् । भेदात्यये मुच्यन्ते[3] इति ॥

इत्यारण्यके पञ्चमप्रपाठके उपनिषत्सु सप्तमोऽनुवाकः.

---

[1]व्यानेश्वरग्रहणे कर्महेतुत्वे च मनः । [2]अत्र ग्रन्थो गलित इव भाति.

[3]भेदात्ते ये मुच्यन्ते ।

ओमिति ब्रह्म । ओमितीदꣳ सर्वम् । ओमित्येतदनुकृति ह स्म वा अप्यो श्रावयेत्याश्रावयन्ति । ओमिति सामानि गायन्ति । ओꣳशोमिति शस्त्राणि शꣳसन्ति । ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति । ओमिति ब्रह्मा प्रसौति । ओमित्यग्निहोत्रमनुजानाति । ओमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपाप्नवानीति । ब्रह्मैवोपाप्नोति ॥ १६ ॥

ओं दश ॥ ८ ॥

[1]इदानीमुक्तोपासनाङ्गत्वेन भावनौपायिकतया प्रणवं विदधाति—ओमिति ब्रह्मेत्यादि ॥ **ओमित्येतदक्षरं परं ब्रह्म** एतदक्षरप्रतिबिम्बतमेतदक्षरोपरक्तं वा यस्मात्प्रकाशते तस्मादभेदेनोपास्यं, तत्प्रतिपादकत्वात् यावत्तत्तद्भावाभिव्यक्तिः । तत्र द्वयोर्भिन्नयोस्संभवादुच्चारणकालेन व्याप्तं शब्दानामेवोपासनम् । किंच—**इदं सर्वं** जगत् ओंकार एव । विश्वात्मकं जगदुपादानस्वरूपत्वात् ब्रह्मात्मानमादर्शयति । यस्मादेवं तस्मात् **ओमित्यनुकृति** अनुक्रियत इति अनुकृतिः ओमित्येषा अनुकृतिः **एतदनुकृति** अनुकरणाक्षरं ओङ्कारोपि । एषोऽस्य महिमा यदेतदनुकरणं **अप्यो श्रावयेत्येतदा**श्रावयन्तः प्रयुञ्जते । हेति हेतौ । एवं हि कृत्वेत्यर्थः । स्मेति दार्ढ्ये । वा इति प्रसिद्धौ । एवं सामादिषु यथायोगं द्रष्टव्यम् । सर्वत्राध्येष्यमाणस्य दोषाभावार्थोऽस्योपदेशः प्रवक्ष्यन्नित्युपलक्षणत्वात् । अध्येष्यमाणश्च **ओमित्याह** ब्रह्मणः वेदविद्यात्मनो लाभो मे भूयादिति । तस्मादेवं महानुभावत्वात् अस्य ओमित्येव ब्रह्मोपास्यम् । तथा कुर्वन् ब्रह्म परमुपाप्नोत्येव । अनावृतप्रकाशत्वं तदवाप्तिः ॥

इत्यारण्यके पञ्चमप्रपाठके उपनिषत्सु अष्टमोऽनुवाकः.

[1]ऋतं च स्वाध्यायप्रवंचने च । सत्यं च स्वाध्यायप्रवंचने च । तपश्च स्वाध्यायप्रवंचने च । दमश्च स्वाध्यायप्रवंचने च । शमश्च स्वाध्यायप्रवंचने च । अग्नयश्च स्वाध्यायप्रवंचने च । अग्निहोत्रं च स्वाध्यायप्रवंचने च । अतिथयश्च स्वाध्यायप्रवंचने च । मानुषं च स्वाध्यायप्रवंचने च । प्रजा च स्वाध्यायप्रवंचने च । प्रजनश्च स्वाध्यायप्र-

---

[1]इदानीं ऋतादीनि उपासनायां सहकारित्वेन उपदिशति— **ऋतं चेत्यादि** ॥ ऋतं च **स्वाध्यायप्रवचने** च सहकारिकारणानि नोपासनामात्रमेव । एवं सत्यं चेत्यादि द्रष्टव्यम् । कर्तव्यमिति[1] सर्वत्र शेषः । यथा सङ्कल्पितकरणमृतं मानसम् । यथोक्तकरणं सत्यं वाचिकम् । स्वाध्यायो विद्याया अध्ययनम् । व्याख्यानं प्रवचनम् । ब्रह्मचर्यादयो मौनानाहारादिकं **तपः** । विहितकर्मानुष्ठानजन्मा[2]ग्लानिः **दमः** । मिथ्येन्द्रियाणामप्रवृत्तिः **शमः** । **अग्नयः** चित्या आहवनीयादयो वा । पुनः अग्निहोत्रग्रहणं प्राधान्यख्यापनार्थम् । कर्मभिर्विकल्पार्थं वा । अतिथिग्रहणं तत्पूजार्थम् । **मानुषं** उत्सवादौ देवपूजाप्रणामादिः । **प्रजा** प्रजार्थं गर्भाधानादिसंस्कारः । **प्रजनः** प्रजार्था ऋतुकालगमनादयः । **प्रजातिः** सन्तानकारिणः पुत्रा दयः । स्वाध्यायप्रवचनसहितमृतादिकं प्रजात्यन्तमेकैकमेव सहकारिकारणं गृहस्थानाम् । **इतरेषां च यथा**-सम्भवं द्रष्टव्यम् ॥

---

[1]कर्तव्यमिति वा. [2]नुष्ठानकर्मा. [3]पौत्रा.

वंचने च । प्रजातिश्च स्वाध्यायप्रवंचने च । [2]सत्य-मिति सत्यवचा राथीतरः । तप इति तपोनित्यः पौरुशिष्टिः । स्वाध्यायप्रवचने एवेति नाकौ मौद्गल्यः । तद्धि तपस्तद्धि तपः ॥ १७ ॥

प्रजा च स्वाध्यायप्रवंचने च षट् ॥ ९ ॥

अहं वृक्षस्य रेरिवा । कीर्तिः पृष्ठं गिरेरिव ।

---

[2]सत्यमेव पर्याप्तं नार्थः स्वाध्यायप्रवचनाभ्यां इति **सत्यवचा राथीतरः** रथीतरस्यापत्यमृषिराह । तप एवालं इति **तपोनित्यो** नाम **पौरुशिष्टिः** पुरुशिष्टस्यापत्यमृषिः वदति । **स्वाध्यायप्रवचने** एव निरपेक्षे हेतू इति **नाको** नाम **मौद्गल्यः** मुद्गलस्यापत्यमृषिराचष्टे । हेतुं चाह—तद्धीति । स्वाध्यायप्रवचनाभ्यामपरं तपो नास्तीति । आदरार्था पुनश्श्रुतिः । अत्राश्रमभेदेन यथायोगं पक्षत्रयं व्यवस्थाप्यम् । सत्यादीनां पुनर्वचनं प्राधान्यख्यापनार्थमिति केचित् ॥

इत्यारण्यके पञ्चमप्रपाठके उपनिषत्सु नवमोऽनुवाकः.

---

[1]अहं वृक्षस्य इति मन्त्रः परेण ब्रह्मणा ऐक्यभावना[1]ङ्गत्वेन विधीयते । इयं षट्पदा जगती । **अहं वृक्षस्य** व्रश्चनीयस्य प्रपञ्चस्य वृक्षस्य **रेरिवा** भृशं क्षोभयिता अत्यन्तोच्छेदेन परेणैक्यमापन्नः । व्रश्चतेरौणादिकः क्सः । व्रश्चादिना षत्वम् । 'षढोः कस्सि' इति कत्वम् । रिङो यङ्लुगन्तात् 'अन्येभ्योपि' इति क्विप् । छान्दसं ह्रस्वत्वं, इडभावश्च । **रेरिवा** । अन्त्यलोप-

---

[1]भावेना.

**ऊ॒र्ध्वप॑वित्रो वा॒जिनी॑व स्व॒मृत॑मस्मि । द्रवि॑ण॒ꣳ सव॑र्चसम् । सु॒मे॒धा अ॑मृ॒तो॒क्षितः । इति त्रिश॑ङ्कोर्वेदा॑नुव॒चनम् ॥ १८ ॥**

**अह॒ꣳ षट् ॥ १० ॥**

---

श्छान्दसः । **कीर्तिः** कीर्तिमान् । मत्वर्थीयो लुप्यते, इकारो वा मत्वर्थीयः । यद्वा—**कीर्तिः** कीर्तनीयः निगमान्तैः । उपमानपदं यथा कीर्तिः केन चिच्छादयितुं न शक्यते एवमहं महाप्रकाशोस्मीति । अत्रैव दृष्टान्तमाह—**गिरेः** पर्वतस्य **पृष्ठमिव** न हि तद्वस्त्रादिना छादयितुं शक्यते एवमस्मिन् सम्पन्नः । यद्वा—कीर्त्या महत्त्वं रक्ष्यते । गिरेः पृष्ठमिव महान् सम्पन्नोस्मि इति । **ऊर्ध्वपवित्रः** ऊर्ध्वपवित्रत्वमेव यस्य । पूयते अनेनेति पवित्रम् । 'पुवस्संज्ञायां' इतीत्रप्रत्ययः । चरितादिकमस्य स्मर्तॄणां पवित्रमिति । वाजी नित्यगतिरादित्यः तस्मिन्निव वर्तमानोस्मीति । **स्वमृतं** न परात्मा पुरुषः जीववदमृतमात्रं अपि तु शोभनमसृतं सर्वदा एकरूपं परमात्मशरीरं दहरस्थानीयं सवितृमण्डलमध्यस्थितं परवस्त्वेवास्मीति । **द्रविणं** वरिष्ठं धनं द्रवणीयं वा सर्वैः **सवर्चसं** महाबलं यत् स्वमृतं तदेवास्मीति । अत एवाहं **सुमेधाः** शोभनबुद्धिः **अमृतः** मरणरहितः **अक्षितः** अनुपक्षयः अजरः । यद्वा—अमृतोक्षितः अमृतत्वहेतुना आनन्देनाप्लुतः । **इति त्रिशङ्कोः** क्षत्रियब्राह्मणस्य महर्षेः **वेदानुवचनं** उपासने मन्त्रकथनम् । इमं मन्त्रमवोचत् उपासनाङ्गं ऋषिनिर्देशः तत्स्मरणे मन्त्रस्य साद्गुण्याय ॥

इत्यारण्यके पञ्चमप्रपाठके उपनिषत्सु दशमोऽनुवाकः.

---

[1]वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति । सत्यं वद । धर्मं चर । स्वाध्यायान्मा प्रमदः । आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः । सत्यान्न प्रमदितव्यम् । धर्मान्न प्रमदितव्यम् । कुशलान्न प्रमदितव्यम् । भूत्यै न प्रमदितव्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् ॥ ११ ॥ देवपितृकार्याभ्यां न प्रमदितव्यम् । [2]मातृदेवो भव । पितृदेवो भव। आचार्यदेवो भव । अतिथिदेवो भव । यान्यनवद्यानि कर्माणि । तानि सेवि-

---

[1]वेदमनूच्य इत्यादि गतम् । अनुशासनार्थत्वात् शब्दान्तरेणाप्यर्थोऽनुशिष्यः न प्रैषसमानम् । केषांचित् सिद्धानामपि सत्यवचनादीनां उपनिषद्विद्यानुवचनानन्तरं फलाधिक्यार्थं अनुशासनम् । सति साधु सत्यं तथ्यं धर्मः श्रुति[1]विहिता क्रिया । स्वशाखाध्यायः स्वाध्यायः तस्मात् मा प्रमदः प्रमत्तो मा भूः । आचार्याय प्रियं धनं विद्यादक्षिणामाहृत्य प्रजातन्तुं प्रजासन्तानं मा व्यवच्छेत्सीः विच्छिन्नं मा कार्षीः । विद्यामधिगम्य न त्वरितेन प्रव्रजितव्यं सन्तानार्थं निवेशनं तावत् कर्तव्यमित्यर्थः । सिचि वृद्ध्यभावश्छान्दसः । सत्यधर्मयोः प्रमादः कदाचित्प्रतिपक्षानुष्ठानम् । कुशलमात्मरक्षा । भूतिः सिद्ध्यर्था क्रिया । गतमन्यत् ॥

[2]मात्रादीनां देववत् पूजार्थं मातृदेवत्वाद्यनुशासनम् । अनवद्यानि अगर्हितानि कर्माणि त्वया सदा सेवितव्यानि न तु

---

[1]श्रुतिस्मृति.

तव्यानि । नो इतराणि । यान्यस्माकꣳ सुचरितानि । तानि त्वयोपास्यानि ॥ २० ॥ नो इतराणि । ये के चास्मच्छ्रेयाꣳसो ब्राह्मणाः । तेषां त्वयाऽऽसने न प्रश्वसितव्यम् । [3]श्रद्धया देयम् । अश्रद्धयाऽदेयम् । श्रिया देयम् । ह्रिया देयम् । भिया देयम् । संविदा देयम् । [4]अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात् ॥ २१ ॥

---

कदाचिदपि **इतराणि** गर्हितानि । किं यस्य कस्यचित् अनवद्यानि कर्माणि ? नेत्याह—**यान्यस्माकं** शोभनानि **चरितानि तानि त्वयोपास्यानि** यत्नतश्शिक्षणीयानि । इतराण्यनवद्यान्यपि त्याज्यानि । इदं परं हितं ब्रूमः—**ये** नाम **केचित्** अस्मत्तः **श्रेयांसः** प्रशस्यतराः **ब्राह्मणाः** तेषां **आसने** आस्थाने गोष्ठ्यां **त्वया न प्रश्वसितव्यं** न विस्रब्धेन व्यवहर्तव्यं, न वा प्रागल्भ्यं स्थापितव्यम् ॥

[3]श्रद्धादयष्षडपि हेतव इत्येके । केचिदकारप्रश्लेषमाहुः—**श्रद्धयैव देयम् अश्रद्धया त्वदेयमेव** । श्रीयुक्तेन विभववतैव देयं न त्वसति विभवे । **ह्रिया** लज्जामात्रेण दातव्यम् । **भिया देयं** अदाने प्रत्यवायात् भयविशिष्टेनैव देयम् । **संविदा** प्रकातिस्थितया को दोषः दीयतामितिभावेन न दातव्यम् ॥

[4]**अथेत्यादि** ॥ **कर्माण्य**ग्निहोत्रादीनि । **वृत्त**माचारः । **विचिकित्सा** सन्देहः । तद्विषये कथमुपासकस्य भवितव्यम् । ये तत्र तस्मिन्नर्थे **संमर्शिनः** विचारकुशलाः । यद्वा—**तत्र** देशे

ये तत्र ब्राह्मणास्संमर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्मकामास्स्युः । यथा ते तत्र वर्तेरन्न् । तथा तत्र वर्तेथाः । अथाभ्याख्यातेषु । ये तत्र ब्राह्मणास्संमर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्मकामास्स्युः । यथा ते तेषु वर्तेरन्न् ॥२२॥ तथा तेषु वर्तेथाः । [5]एष आदेशः । एष उपदेशः । एषा वेदोपनिषत् । एतदनुशासनम् । एवमु-

---

तत्र वा काले ये **ब्राह्मणास्सम्मर्शिनः युक्ताः** अभियुक्ताः **आयुक्ताः** तात्पर्यवन्तः **अलूक्षाः** अलुब्धाः अदरिद्रा वा **धर्मकामा** अदाम्भिकाः **यथा** ते तत्र **वर्तेरन्** तत्र वृत्ते कर्मणि वा वर्तेरन् यथा ते तत्कुर्युः तथा त्वमपि कुर्याः । **अभ्याख्याताः** अभ्याकृष्टाः निन्दितार्थाः तेषु यदि विचिकित्सा स्यात् । ये इत्यादि । गतम् ॥

[5]**एष** इत्यादि ॥ **आदेशः** ब्राह्मणम् । **उपदेशः** स्मृतिः । शान्त्याशासनादिकं शिष्यानुशासनान्तमेतत्सर्वमादेशः उपदेशश्च श्रुतिस्मृत्यर्थ एवमस्माभिरुक्त इत्यर्थः । यद्वा—श्रुतिस्मृत्योः कृत्स्नोऽर्थ एव सङ्ग्रहोक्त इति वेदितव्यम् । किञ्च—**एषा वेदोपनिषत्** वेदरहस्यं **एतदनुशासनं** अमोघफलं राजशासनवत् अनतिक्रमितव्यमिति वा । **एवं** उक्तेन प्रकारेण **उपासितव्यं** उपासनं कर्तव्यम् । **एवमेव एतत्** परं वस्तु **उपास्यं** नान्यः पन्थाः

पा॑सित॒व्यम् । एवमु॒ चैत॑दु॒पास्यम् ॥ २३ ॥

स्वाध्यायप्रवचनाभ्यां न प्रम॑दित॒व्यं तानि त्वयो॑पास्या॒नि स्यात्तेषु॑ वर्तै॒रन्थ्स॒प्त च॑ ॥ ११ ॥

शं नो॑ मि॒त्रश्शं वरु॑णः । शं नो॑ भवत्वर्य॒मा । शं न॒ इन्द्रो॒ बृह॒स्पति॑ः । शं नो॒ विष्णु॑रुरुक्र॒मः । नमो॒ ब्रह्म॑णे । नम॑स्ते वायो । त्वमे॒व प्र॒त्यक्षं॒ ब्रह्मा॑सि । त्वामे॒व प्र॒त्यक्षं॒ ब्रह्मा॒वा॑दिषम् । ऋ॒तम॑वादिषम् । स॒त्यम॑वादिषम् । तन्मामा॑वीत् । तद्व॒क्तार॑मावीत् । आवी॒न्माम् । आवी॑द्व॒क्तार॑म् । ओं शान्ति॒श्शान्ति॒श्शान्ति॑ः ॥ २४ ॥

स॒त्यम॑वादिषं॒ पञ्च॑ च ॥ १२ ॥

---

पर्येषणीयः । उ इत्यवधारणे ॥

इत्यारण्यके पञ्चमप्रपाठके उपनिषत्सु एकादशोऽनुवाकः.

[1]शं न इत्यादिशान्त्यनुवाक उक्तप्रयोजनो व्याख्यात एव । अवादिषं अवादीति भूतकालप्रत्ययो विशेषः । एवं त्वत्प्रसादेनैव त्वां अविघ्नेन अवादिषं अद्ध्यगीषम् । तत् च अधीतं मां आवीत् मिथ्याधीतत्वादिदोषप्रसङ्गेन निवर्तिताध्ययनं यथा त रक्षति स्म । समानमन्यत् ॥

इत्यारण्यके पञ्चमप्रपाठके उपनिषत्सु द्वादशोऽनुवाकः.

[1]सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु मा विद्विषावहै। ओं शान्तिश्शान्तिश्शान्तिः ॥ २५ ॥

सह पञ्च ॥ १३ ॥

[1]ब्रह्मविदाप्नोति परम्। [2]तदेषाऽभ्युक्ता। सत्यं

---

[1]अथ वारुण्य उपनिषद आरभ्यन्ते—सह नाववत्वित्यादौ ॥ **नौ** त्वां मां च शिष्यं च अधीयमानं ब्रह्म **अवतु** रक्षतु मिथ्याधीतत्वादिदोषप्रसङ्गो यथा न भवति तथा करोतु। किंच—**नौ** आवां **सह भुनक्तु** अध्ययनफलभागेन योजयतु। अन्तर्भावितण्यर्थस्य परस्मैपदम्। सहैव आवां **वीर्यं करवावहै** उत्पादयावहै। लेटचाडागमः। अन्यतरापचारे निर्वीर्यत्वादिप्रसङ्गात्। किंच—**नौ** आवयोः **अधीतं** अध्ययनं **तेजस्वि** तेजस्करं **अस्तु**। ततः परमावां **मा विद्विषावहै** परस्परं विद्वेषं माकार्ष्व। लेटचाडागमः। 'वैतोऽन्यत्र' इत्याकारः। शान्तेः वचनं उक्तप्रयोजनम् ॥

इत्यारण्यके पञ्चमप्रपाठके उपनिषत्सु त्रयोदशोऽनुवाकः.

---

[1]इयं आनन्दवल्ली आनन्दब्रह्मणो वैभवप्रतिपादनार्था परप्राप्तिफला। अथ उपासनान्तरं विधीयते। तत्र उपासनाफलं उपासनासामग्री चात्रानुवाके उच्यते—**ब्रह्मविदित्यादि** ॥ ब्रह्म- परिबृढं सर्वतः परं वस्तु तद्वित् तदीयानन्दज्ञानवैभवज्ञानपूर्वकं तस्य ज्ञात्वा उपासिता **आप्नोति** प्राप्नोति **परं** प्रकृष्टं श्रेयः

ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे

---

अपवर्गं सर्वदुःखनिवृत्तिम् । ब्रह्मैव[1]श्रेयस्त्वेन व्यपदिश्यते आप्नोति-श्रुतेः । यद्वा—आनन्दब्रह्मवित्[2]परं ब्रह्म आप्नोति तस्मात् तस्य आनन्दब्रह्मणो महिमानं ब्रूम इति भावः ॥

सिद्धानुवाद इति चेत् न—यस्मात् ब्रह्म विदित्वा उपासीत इति विधिरनुमीयते तस्मात् उपासीतेति विधिशेषः । ज्ञानविधिरेव वा उपासनासहायत्वेन अर्थवान् । 'सत्यत्वादि-लक्षणं ब्रह्म' इति ज्ञानमात्रेण वक्ष्यमाणसर्वकामावाप्त्यभावात् गुहाद्याधारविशेषस्य उपासनैकान्तत्वात् ॥

[2]इदानीं अमुमेव अर्थं समर्थयितुं पुरातनीं गाथामुदाहर्तुमाह—**तदेषा** इति ॥ तत् इदं अर्थरूपं **अभिलक्ष्य एषा** वक्ष्यमाणा ऋक् **उक्ता** पुराविद्भिः । तां चाह—**सत्यमिति** ॥ अयं विष्टारपङ्क्तिविशेषः ॥

अत्र इयमौपनिषदी स्थितिः—ब्रह्म एकान्ततत्त्वं नित्यं स्वप्रकाशं विचित्रानन्दशक्तिकं स्वतन्त्रं द्रव्यम् । तत् स्वातन्त्र्यैकस्वभावमहिम्नि सदा महीयमानं प्रकृतिश्च उपादानं च विश्वस्य भवति । निमित्तं च भूत्वा विश्वमधितिष्ठति । तद्धि 'बहु स्याम्'* इति सङ्कल्पमानं मायाशक्तिसहायं द्विधाऽऽत्मानं विभजति । तत्रैव परप्रकृतिः चिदचिदात्मकत्वेन प्रपञ्चत्वेन परिणमते । सैषा परस्य ब्रह्मणः प्रभास्थानीया । तत्र सर्वेऽप्यात्मानः प्रभान्ति । अतः

---

[1]आत्मैव. *तै. उ. २-६. [2]आत्मवित्.

ख्योमन् । सोऽश्नुते सर्वान्कामान्त्सह । ब्रह्मणा वि-

स परमात्मा सर्वात्मप्रभासमष्टिः । इममेव देशं प्राप्य परस्य[1]प्रभाः प्रभान्ति ज्ञानक्रियानादप्रभा शक्तिप्रभा आनन्दप्रभा चेति । एतासां प्रभाणामविभागः परप्रकृतिः । तस्याः परमतेजस्थानीयाया ज्वलन्त्या विप्रुट्स्थानीया आत्मानः सङ्कुचितप्रभात्वात् । तेषु ब्रह्मगुणाः प्रायेण तिरोहिताः । आहुश्च—

अग्नेरौष्ण्यं यथा यद्वदादित्यस्य प्रभाऽपि च ।
परमात्मा शिवादन्यो नास्तीति मुनयो विदुः ॥

इति । सैषा मुक्तानामीश्वरस्य च साक्षादर्थक्रियाहेतुः; परम्परया त्वन्येषाम् । अथ सैव भोक्तृत्वशरीरोपधानात् पुरुषो भवतीति तदंशा अल्पशरीरा भोक्तारः । ते च बद्धा मुक्ताश्च । तत्र बद्धानां बन्धवेष्टितानां ब्रह्मगुणाः प्रायेण तिरोहिताः । मुक्तास्तु अपहतपाप्मत्वादिगुणशालिनो ब्रह्मीभूताः तत्सङ्कल्पेन पृथक्पृथक् चेतना एव वर्तन्ते । तत्समा भवन्तीत्यपरम् । न त्वेषां जगदीश्वरत्वम् । स्वाभिमतभोगमात्रे स्वातन्त्र्यमेषाम् । अथ तस्या एव परप्रकृतेः परिणामात्मानो जीवादयः । तत्र मुक्तानां ईश्वरस्य च मनस्थानीयसत्त्वोद्रेकात् सर्वमनस्समष्टिर्मनोमयः । स आदित्याधिष्ठितो जीवानां मनो भवति । तमउद्रेकात् सर्ववाक्समष्टिर्वाङ्मयः मुक्तानामीश्वरस्य च वाक् भवति । अग्न्यधिष्ठिता जीवानां वाक् । रजउद्रेकात् सर्वक्रियासमष्टिः प्राणमयः मुक्तानामीश्वरस्य च परिस्पन्दहेतुः चन्द्राधिष्ठितो जीवानां प्राणः । अथ तस्या एव प्रकृतिपरिणामः त्रिगुणा प्रकृतिः शतपरिणा-

[1]परस्य प्रपञ्चस्य.

मिनी अचेतना । सर्वब्रह्मगुणतिरोधानात् अचेतनत्वम् । तत्परिणामाः महदादिपृथिव्यन्ताः त्रयोविंशतिः । कालो नियतिरव्यक्तमिति प्रकृतिविधाः । अयं प्राकृतस्सर्गो जीवानां भोग्यः । भोजयिता त्वीश्वरः । मायाशक्तिस्सर्वत्र कारणी । यथा—

मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम् ।
अस्यावयवभूतैस्तु व्याप्तं विश्वमिदं जगत् ॥* इति ॥

अथ सैव परप्रकृतिः परेण सह आत्मानमैक्यमापादयन्ती तिरोहितभेदा परशक्तिरुच्यते ॥

अत्र केचिदाहुः—ईश्वरादिपृथिव्यन्तेषु सर्वत्र अनुवृत्तं सत्प्रत्ययनिबन्धनं सन्नाम सर्वसमष्टिभूतं ब्रह्म । सत्त्वं च निरतिशयव्यापकम्[1] । तत ईश्वरोपि तेन व्याप्य इति । श्रूयते च—'सदेव सोम्येदमग्र आसीत्'† इति ॥ तत्र विश्वात्मकं सत्त्वं किं ईश्वरः? उत अनीश्वरः? । ईश्वरश्चेत् तेन व्याप्यः कथं अन्य ईश्वरः स्यात् । निरतिशयैश्वर्यवाचित्वात् ईश्वरशब्दस्य । तत्र व्याप्यस्यापि ईश्वरत्वप्रसङ्गात् । अनीश्वरत्वे कथं तत् ब्रह्म स्यात् । तस्मात् न प्रबलपदश्रुतिसामर्थ्यबाधनं युक्तम् । प्रपञ्चाभिप्रायेणाप्यर्थोपपत्तेः निरतिशयत्वविशेषलाभः । किंच—'बहु स्याम्'‡ इति सङ्कल्पात् प्राक् सकलप्रत्यस्तमये किं व्याप्नुवत् स्यात् । निरतिशयस्वातन्त्र्यं तु तादृशी दशा पौष्कल्यायैवेति निरतिशयस्वातन्त्र्यमेव सत्त्वमिति तदा सर्वत्र[2]सादिति प्रत्यय इत्यलमतिप्रसङ्गेन ॥

अत्र 'ब्रह्मविदाप्नोति' इति वेद्याप्ययोः पृथक्त्वनिर्देशात् पुंसाममृतत्वप्राप्तये उद्भूतबृंहणसामर्थ्यमुपादानरूपं ब्रह्म इत्युच्यते ।

[1]ब्रह्मत्वं च निरतिशयव्यापकत्वम्. [2]तदा तत्र.

*श्वेताश्व. ४-१०. †छा. ६-२-१. ‡तै. उ. २-६.

परशब्देन च प्रधानं स्वातन्त्र्यस्वभावं निमित्तरूपमुच्यते । परशब्दः प्रधानवचनः यदात्मिकायाः प्रकृतेः पराहंव्यक्तिस्थानभूतायाः दर्पणस्थानीयायाः याथात्म्येन वेदिता तत्परमाप्नोति 'द्वे ब्रह्मणी वेदितव्ये परं चापरं च' इति ॥

**सत्यमिति ॥ सत्यं** अविपर्यस्तस्वभावं नित्यं **ज्ञानं** प्रकाशस्वभावं **अनन्तं** अपरिच्छिन्नं ईदृशं[1] **परं ब्रह्म** सर्वतः परिबृढं वस्तु **यो वेद** विदित्वा उपास्ते **गुहायां निहितं** उपासकानुग्रहाय हृदयाकाशे संनिहितं **परं** ब्रह्म आत्मनि च अभेदात् दर्पणवत् नित्यसंनिहितं य उपास्ते **परमे व्योमन्** तत्स्थतया उपास्ते तस्यापि वेद्यत्वात् 'स यश्चायं पुरुषे । यश्चासावादित्ये'* इति परस्तात् व्यक्तिर्भविष्यति । **सः** तथोपासिता अश्नुते प्राप्नोति **सर्वान् कामान् सह ब्रह्मणा** परिबृढेन परेण **विपश्चिता** मेधाविना सहैव युगपदेव तद्भावं च प्राप्नोति । आहुश्च—

**यं मे गुह्यतमं देहं सर्वगं तत्त्वदर्शिनः ।**
**प्रविष्टास्ते परां सिद्धिं निर्वाणं ते मया सह ॥**

लभन्ते इति शेषः ।

**तेषां हि वशमापन्ना माया मे विश्वरूपिणी । इति ।**[2]

श्रूयते च—

**यदा[3]त्मत्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्येत् ।**
**अजं ध्रुवं सर्वतत्त्वैर्विशुद्धं ज्ञात्वा देहं[4] मुच्यते सर्वपाशैः ॥**† **इति॥**

---

[1]अपरिच्छिन्नं......न तु ल्युडन्तः । मत्वर्थीयाकारान्तो वा । लित्स्वराभावः । तस्मात्स्वप्रकाशस्य वेश्वरस्य चेष्टितमीदृशं.

[2]प्रविष्टा वशमापन्ना माया मे विश्वरूपिणी ।
लभते परमां सिद्धिं निर्वाणं ते मया सह ॥ इति ॥

[3]सदा. [4]देवं. *तै. उ. २-८. †श्वे. २-१५.

**पृश्चितेति । [3]तस्माद्वा एतस्मादात्मन आकाशस्सं-भूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः । ओषधीभ्योऽ-**

अनन्तस्य कथं गुहायामुपासनमिति चेत् गुहाया[1]मित्यदोषः । गुहासन्निधियोग्यतदीयाकारविशेषोपासनविधिर्वा । मुक्तात्मनः कामाभावात् सह ब्रह्मणा कामानश्नुते इत्ययुक्तमिति चेत् युक्तं 'स यदि पितृलोककामः'* इति । दुःखानुषङ्ग इति चेत् न आनन्दानुप्रवेशात् । सर्वात्मत्वात् सर्वशरीरसुखदुःखानुषङ्ग इति न समुद्रादावेकावयवविकारे† । पृथक् अचेतनत्वात् कामानुपपत्तिरिति चेत् न ब्रह्म[2]चैतन्येनैव सर्वेषां पृथक्चेतनत्वात् । दृश्यत्वप्रसङ्ग इति चेत् न द्रष्ट्रन्तरस्याभावात् । संसारिणां च मायावृतत्वेन द्रष्टु[3]मशक्यत्वात् मुक्तानां च वेदना[4]नुपलब्धेः । अतद्व्यावृत्तिधीरतै[5]वोपासना । किञ्च—श्रुतिप्रामाण्यात् सर्वमुपपद्यते इति श्रद्धातव्यम्[6] ॥

[3]तस्मादित्यादि ॥ पररूपप्राप्तिहेतुतयाऽनन्तरोक्तं यत् प्रकृतिरूपं ब्रह्मण आनन्दात्मकं तत् **तस्मादेतस्मा**दिति परामृश्यते । **आत्मनः** ज्ञानरूपत्वात् तत **आकाशस्सम्भूतः** स एव भूताकाशत्वेन परिणतः । पदार्थविशेषः आकाशः नाभावमात्रम् । सम्भूतश्रुतेः । उक्तश्चेतःपरिणामः ।

ननु ज्ञानादुत्पन्नत्वादाकाशादीनां चेतनत्वप्रसङ्ग इति चेन्न विलक्षणपरिणामदर्शनात् । नन्वात्मनो विज्ञानमयः विज्ञानमयान्मनोमयः

[1]ओंगुहाया. [2]पर. [3]ग्र.मु. [4]च भेदा.
[5]वकिते. [6]व्यात्सर्वत्र श्रद्धातव्यमुपपद्यत इति श्रद्धातव्यम् ।
*छा. ८-२-१. †अत्र ग्रन्थो गलित इव.

**न्नम् । अन्नात्पुरुषः । स वा एष पुरुषोऽन्नरसमयः । [4]तस्येदमेव शिरः । अयं दक्षिणः पक्षः । अयमुत्तरः पक्षः । अयमात्मा । इदं पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥ २६ ॥ [5]अन्नाद्वै प्रजाः प्रजायन्ते ।**

मनोमयादाकाशमय उत्पन्नः तत् कथं आत्मनः आकाशस्सम्भूत इत्युच्यते? । 'क्षीरात् घृतं भवति' इतिवत् द्रष्टव्यमिति न दोषः । मनस्येव हि भूतानामुपसंहारः 'मनः प्रयन्त्यभिसंविशन्ति'* इति प्रलयदर्शनात् । न ह्यन्यत उत्पन्नस्यान्यत्र प्रलयः तयोस्तदनभिधानात् । भूतोत्पत्तेर्विवक्षितत्वात् । गतमन्यत् । विस्पष्ट एवैषां कार्यकारणभावः ।

**अन्नात्पुरुष** इति । अन्नरसमयात् शरीरमित्यर्थः । विकारे मयट्प्रत्ययः अन्नपरिणामरशुक्लविकार इत्यर्थः ॥

[4]तस्येति ॥ इदंशब्देन प्रत्यक्षप्रसिद्धानि शरीरप्रभृतीनि दर्शयति । तच्च उपासनार्थमिति सर्वत्र वेदितव्यम् । पक्षौ हस्तौ स्थानसामान्यात् । आत्मा मध्यमो देहभागः शिरःप्रभृतिव्यतिरिक्तः । पश्चाद्भागत्वात् पादौ **पुच्छं प्रतिष्ठा** प्रतिष्ठानहेतुत्वात् तयोः प्रतिष्ठात्वम् । एवं उपासनायाः क्रतुतुल्यत्वं दर्शयितुं शिरःपक्षात्मपुच्छवदग्निपुरुषत्वेन पुरुषस्य रूपणा कृता । **तदपीति** । तत्रापीत्यर्थः । तमन्नमयमधिकृत्य **एष** वक्ष्यमाणः **श्लोको भवतीत्यर्थः** । श्लोक्यते स्तूयते अनेनेति श्लोकः प्ररोचनार्थं ब्राह्मणमुच्यते ॥

[5]**अन्नाद्वा** इति त्रिष्टुब्विशेषः ॥ क्रियात्रययोगेन अन्नस्य ब्रह्मभावेन स्तुतिः क्रियते । **याः काश्चेति** स्वेदजादयोपि गृ-

*तै. उ. ३-४.

याः काश्च पृथिवीꣳ श्रिताः । अथो अन्नेनैव जीवन्ति । अथैनदपि यन्त्यन्ततः । अन्नꣳ हि भूतानां ज्येष्ठम् । तस्मात्सर्वौषधमुच्यते । सर्वं वै तेऽन्नमाप्नुवन्ति । येऽन्नं ब्रह्मोपासते । अन्नꣳ हि भूतानां ज्येष्ठम् । तस्मात्सर्वौषधमुच्यते । अन्नाद्भूतानि जायन्ते ।

---

ह्यन्ते । देवादयोपि परम्परया **पृथिवीं श्रिताः** । तेऽपि अन्नाधीनस्थितिकत्वात् **अन्नाज्जायन्ते** । **अथो** जन्मानन्तरं **अन्नेन जीवन्ति अथ अन्ततः** अन्तकाले **अन्नं अपि यन्ति** अनुप्रविशन्ति अन्नकारणपृथिव्यनुप्रवेशात् । तस्मात् सर्व**भूतानां** जन्मजीवनाप्ययकारणत्वात् **अन्नमेव ज्येष्ठं** प्रशस्यतमं वृद्धतमं वा । **तस्मात् सर्वौषधं** अन्नं **उच्यते** तद्विद्भिः । सर्वेषां सुरनरतिर्यगादीनामप्यनिष्टोपशमनहेतुत्वात् । अथ अन्नब्रह्मण उपास्यत्वमाह—सर्वं वा इति । अन्नोपासकास्सर्वामन्नजातिं आप्नुवन्ति । उक्तेन न्यायेन अन्नस्य सर्वज्येष्ठत्वात् सर्वानिष्टोपशमनत्वात् सर्वैरुपास्यं अन्नम् । पुनश्श्रुतिरुपासनाविध्यर्थम् । पुनर्ज्येष्ठत्ववचनं स्वान्तरेभ्योऽन्नस्यातिशयप्रदर्शनार्थम् । अन्नं कामयमानस्य अन्नत्वेन ब्रह्म उपास्यम् । अकामयमानस्य तु ब्रह्मैवोपास्यमिति । तस्यान्नादिसर्वकामसमुदायाप्तिः फलं 'सोऽश्नुते सर्वान् कामान्' इति । **अन्नादिति** । पदानिर्वचनार्थं पुनर्वचनम् । **अन्नाज्जायन्ते** भूतानि । अथ जातानि च **अन्नेन वर्धन्ते**। तदुभयं कथमित्याह—अद्यत इति । यस्मात् भूतैः अद्य[illegible] तस्मादन्नाज्जायन्ते भूतानि शुक्लपरिणामेण जीवाः तृणादिपरिणा-

**जातान्यन्नेन वर्धन्ते । अद्यतेऽत्ति च भूतानि । तस्मादन्नं तदुच्यत इति । [6]तस्माद्वा एतस्मादन्नरसमयात् । अन्योऽन्तर आत्मा प्राणमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य**

---

मेन क्षीरादीनि । **जातानि** च अद्यमानेन **अन्नेन वर्धन्ते** एवं भूतैः **अद्यते अत्ति च** स्वयं भूतानि कारणरूपेणान्ने सर्वस्यप्रलयात् । यस्मादेवं आद्यात्तृभावेन सर्वस्य वर्तते तस्मात् कर्मणि कर्तरि च निष्ठाविधानात् अन्नत्वम् । यस्य अन्नब्रह्मणः एवं अन्नरसरूपो व्यापक अत्मा ब्रह्मत्वेन स्तुतः तदभिव्यक्तिस्थानानि च शरीराणि शिरःप्रभृतिमन्ति दर्शितानि । तस्योपास्यत्वं फलं च उक्तं परोपासनाङ्गत्वेन । उक्तं हि—विज्ञानक्रियानादशक्त्यानन्दानामविभागवस्था परप्रकृतिरिति । तेषां एव पृथक्परिणामा एते चानन्दमयादयः पञ्च कोशाः परवस्तुस्वरूपतिरोधानहेतवः येषां ज्ञानमुपासनाच परोपासनाङ्गम् ॥

[6]अथ प्राणमयमात्मानं दर्शयति—तस्माद्वा इत्यादि ॥ **तस्मात् अन्नरसमयात्** पूर्वोक्तात् **आत्मनः अन्य अत्मा प्राणमयः** प्राणसमष्टिरूपः प्राणैरेवारब्धः **अन्तरः** अन्नमयात् सूक्ष्मः कश्चिदस्ति तमपि ब्रूम इति शेषः । **तेन** प्राणमयेन **एषः** उक्तोन्नमयः **पूर्णः** व्याप्तः **स एष** च प्राणमयः **पुरुषविध एव** अन्नमयप्रकार एव । शिरःपक्षात्मपुच्छत्वाभिप्रायेण इदमुच्यते न तु सर्वात्मना साम्यात् । तदेवाह—तस्येति ॥ **तस्य** अन्नमयस्य या पुरुषविधता शिरःप्रभृतिमत्ता तां **अनु** तेनैव

पुरुषविधताम् । अन्वयं पुरुषविधः । [7]तस्य प्राण एव शिरः । व्यानो दक्षिणः पक्षः । अपान उत्तरः पक्षः । आकाश आत्मा । पृथिवी पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥ २७ ॥ [8]प्राणं देवा अनु प्राणन्ति । मनुष्याः पशवश्च ये । प्राणो हि भूतानामायुः । तस्मात्सर्वायुषमुच्यते । सर्वमेव त आयुर्यन्ति । ये प्राणं ब्रह्मोपासते । प्राणो हि भूतानामायुः । तस्मात्सर्वायुषमुच्यत इति ।

---

हेतुना अयं प्राणमयोऽपि पुरुषविध एव तस्य पुरुषविधता तदन्तर्वर्तिना अनेन अनुक्रियत इति यावत् । हेतावनोः कर्मप्रवचनीयत्वम् । तस्मात्प्राणमयोऽपि पुरुषप्रकार इति ॥

[7]तस्यापि शिरःप्रभृति दर्शयति—तस्येति ॥ अत्रापि शिरःप्रभृतित्वेन प्राणादिज्ञानमुपासनार्थम् । आकाशः अन्तश्शरीरवर्ती यत्र प्राणादयस्संचरन्ति । पृथिवी पार्थिवशरीरमुच्यते यत्र प्राणादयः प्रतितिष्ठन्ति । गतमन्यत् ॥

[8]प्राणं देवा इति ॥ देवादयः प्राणं अनु प्राणन्ति प्राणेन हेतुना प्राणन्ति । हेतौ कर्मप्रवचनीयत्वम् । पशुग्रहणं सर्वतिर्यगुपलक्षणम् । प्राणो भूतानां आयुषो हेतुः । तस्मात् सर्वेषामायुः उच्यते । योगविभागादत्र समासान्तः । सर्वमेवेति । प्राणोपासनविधिर्गतः । सर्वपुरुषप्रकारमायुः उपासिता प्राप्नोति । तस्येति । तस्य प्राणमयस्यापि एष एव शारीर आत्मा

**तस्यैष एव शारीर आत्मा। यः पूर्वस्य । [9]तस्माद्वा एतस्मात्प्राणमयात् । अन्योऽन्तर आत्मा मनोमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । [10]तस्य यजुरेव शिरः । ऋग्दक्षिणः पक्षः । सामोत्तरः पक्षः । आदेश आत्मा । अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥ २८ ॥ [11]यतो वा-**

---

यः[1] **पूर्वस्य** अन्नमयस्य पञ्चकोशाख्यं भोगायतनं शरीरम् । तत्र भोक्ता शारीर आत्मा; उत्तरोत्तराधारकाणि आदिशरीरप्रभृतिपरशरीरान्तानि पञ्चकोशशरीराणि । तत्र एक आत्मा उपासकः पुरुष एव सर्वत्र ॥

[9]तस्माद्वा इत्यादि ॥ मननीयो नादात्मा **मनोमयः** मनःपूर्वकत्वाद्वा । ज्ञानविकल्पहेतुस्मृतिमेयः कोशः तेन प्राणमयः व्याप्तः ॥

[10]अत्र यजुरादीनां शिरःप्रभृतित्वेन उपदेशः उपासनार्थः । जातावेकवचनम् । आदेशो ब्राह्मणम् । **अथर्वाङ्गिरस** इति चतुर्थो वेदो गृह्यते । तैः दृष्टत्वात् ताच्छब्द्यं वेदस्य । गतमन्यत् ॥

[11]यतो वाच इति ॥ वाक्छब्देन वागिन्द्रियमुच्यते । बहुवचनादाद्यर्थो गम्यते । वागादीनीन्द्रियाणि **मनसा सह यतो**

---

[1]यस्य.

चो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कदाचनेति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य । [12]तस्माद्वा एतस्मान्मनोमयात् । अन्योऽन्तर आत्मा विज्ञानमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । [13]तस्य श्रद्धैव शिरः । ऋतं दक्षिणः पक्षः । सत्यमुत्तरः पक्षः । योग आत्मा । महः पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥ २९ ॥ [14]विज्ञानं यज्ञं तनुते । कर्मा-

---

मनोमयात् निवर्तन्ते अनन्तत्वात् तस्य अप्राप्त्या कार्त्स्न्येन मनोमयं अगृहीत्वा अर्वागेव श्रान्तानि भवन्ति । यद्वा—तस्य वाचां विभागावस्थानरूपत्वात् वाचः वाचकभेदाः ततो निवर्तन्ते तत्र न सन्तीति । तादृशं मनोमयात्मकं ब्रह्मण आनन्दं आनन्दहेतुं विभूतिं विद्वान् जानन् न कदाचन बिभेति कस्यांचिदप्यवस्थायां अस्य भयहेतुर्नास्ति । तस्येत्यादि । गतम् ॥

[12]तस्मादित्यादि ॥ विविधं ज्ञायते अनेनेति विज्ञानाधारमयो विज्ञानमयः । तेन मनोमयो व्याप्तः । समानमन्यत् ॥

[13]अव्यभिचारेणावस्थितिः श्रद्धा । मानसं तथ्यं ऋतम् । वाचिकं तथ्यं सत्यम् । विज्ञानार्थसंयोगः[1] महः महान् साङ्ख्योक्तम् । गतमन्यत् ॥

[14]विज्ञानमित्यादि ॥ यज्ञः ज्योतिष्टोमादिकर्माणि अष्टका-

---

[1] विज्ञानार्थस्यार्थसंयोग.

णि तनुतेऽपि च । विज्ञानं देवाः सर्वे । ब्रह्म ज्येष्ठमुपासते । विज्ञानं ब्रह्म चेद्वेद । तस्माच्चेन्न प्रमाद्यति । शरीरे पाप्मनो हित्वा । सर्वान्कामान्त्समश्नुत इति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य । [15]तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आत्माऽऽनन्दमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । [16]तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः ।

---

करणादीनि च विज्ञानमेव कुरुते । देवा इन्द्रियाणि च सर्वाणि विज्ञानं एव उपासते तद्भावे भावात् तदेवोपधावन्ति । कीदृशं? ब्रह्म परिबृढं ज्येष्ठं प्रशस्ततमं इन्द्रियाणामपि मनःप्रभृतीनां तदपेक्षत्वात् । तादृशं विज्ञानं ब्रह्म यदि वेद विदित्वा उपास्ते यदि च तस्मात् विज्ञानात् न प्रमाद्यति न हीनो भवति ततः शरीरे शरीरहेतून् शरीरारम्भकान् पाप्मनः पाप्मानि जात्यन्तरकृतानि हित्वा सर्वान् कामान् समश्नुते सह प्राप्नोति सम्यग्वा कार्त्स्न्येन विमुक्त्यै । तस्यैष इत्यादि । गतम् ॥

[15]तस्माद्वा इत्यादि ॥ सर्वानन्दाभिव्यक्त्याधारः आनन्दमयः कोशविशेषः, तत्प्रकरणात् । मयट् च विकारे अन्नमयादिवत् समष्टिविकारत्वदर्शनात् व्यष्टीनाम् ॥

[16]प्रियं प्रीणनं वस्तु । मोदो हर्षः । तस्यातिशयः प्रमो-

प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥ ३० ॥ [17]असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुरिति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य । [18]अथातोऽनुप्रश्नाः ।

---

दः । सुखं आनन्दः । परं ब्रह्म प्रतिष्ठा । तस्मिन् आनन्दमयः प्रतिष्ठां लभते । गतमन्यत् ॥

[17]असन्नित्यादि ॥ आनन्दमयस्य परं ब्रह्म प्रतिष्ठेत्युक्तम् । तत्र इदमुच्यते—आनन्दमयादन्यत् तादृशं किञ्चित् परं ब्रह्म नास्ति इति यो वेद सः असन्नेव अप्रतिष्ठितात्मत्वात् असत्कल्पः अप्रसिद्ध एव भवति अपवर्गं न प्राप्नोति । अथ अस्ति ब्रह्मेति विदन्तं सर्वेऽपि सन्तं परप्राप्त्या प्रशस्तं विदुः जानन्ति । तत एव वेदनात्[1] श्रद्धधानं सर्वे देवादयोऽपि बहु मन्यन्ते । एवं परब्रह्मप्रतिष्ठिततया आनन्दस्यैवेयं स्तुतिः । ब्रह्मशब्देन आनन्दब्रह्मैवोच्यते इत्येके । तत् 'ब्रह्मविदाप्नोति परं'* इति चोक्तो[2]पसंहारोपपत्तिः ॥ यदुपक्रान्तं 'यो वेद निहितं गुहायां'* इति सैषा गुहा अन्नमयाद्यानन्दमयकोशान्ता पञ्चकोशात्मिका समर्थिता वेदितव्या, विदित्वा उपासकस्य परप्राप्तिप्रतिज्ञानात् । तस्यैष इत्यादि । गतम् ॥

[18]अथात इत्यादि ॥ अथातश्शब्दः पर्यन्त[3]वाचीति केचित् । अतश्शब्दो हेत्वर्थे इत्यन्ये । प्रासङ्गिका गुणभूता

---

[1] वेदनार्थं. *उ. २-१. [2] इति परमिति चो. [3] पर्याय.

उताविद्वानमुं लोकं प्रेत्यं। कश्चन गच्छती ३ ।आ-
हो विद्वानमुं लोकं प्रेत्यं । कश्चित्समश्नुता ३ उ ।
[19]सोऽकामयत।बहु स्यां प्रजायेयेति। [20]स तपोऽतप्य-

---

प्रश्नाः केचिदिदानीं क्रियन्ते । उतेत्यादि ॥ अनुष्टुप् । प्लुता-न्तावर्धर्चौ । प्रमादकृतोऽन्यथा वाक्यविच्छेदः । उक्तं—विद्वान् परं प्राप्नोतीति । अत्रेदं पृच्छ्यते—उतशब्दः अप्यर्थे। किं अविद्वानपि प्रेत्य अमुं लोकं अपवर्गाख्यं कश्चन गच्छति? आहोस्वित् विद्वानेव कश्चित् उपासनाकुशलः अमुं लोकं समश्नुते सम्यक्प्राप्नोति? इति । 'विचार्यमाणानां' इति प्लुत उदात्तः । समश्नुता उ इति 'एचोऽप्रगृह्यस्य' इति पूर्वार्धस्याकारः उत्तरार्धस्य इकारः । वर्णव्यत्ययेन तस्य उकारः। अवधारणाय शब्दान्तरमुकार इत्येके—विद्वानेवेति । तदानीं प्लुतविकारो लुप्यते । छान्दसो वा लङ्चडभावः । अस्मिन् प्रश्ने विद्वानेव परं प्राप्नोति इत्युत्तरमुक्तमेव ॥

[19]अथ 'सोऽकामयत' इत्युत्तरवचनात् उन्नेयाः प्रश्नाः । अत्रायं प्रश्नः—ब्रह्मैकं तत्त्वमित्युक्तम् । तत् कथं द्वैताश्रयमुपासनादिकमिति? तत्राह—सोऽकामयत इति ॥ सः विपश्चित् ईश्वरः अकामयत सङ्कल्पं कृतवान् बहु स्यां विज्ञानमयादिरूपेण बहुधा वर्तेय प्रजायेय च देवमनुष्यादिभिश्च बहुप्रजावान् भवेयं इति । तेन द्वैतोपपत्तिरिति ॥

[20]अथ अयमपरः प्रश्नः—विश्वं सृजतोऽस्य का सामग्री इति । तत्राह—स तपो तप्यतेति ॥ सङ्कल्प एवेश्वरस्य तप इति

त। स तपस्तप्त्वा। इद॑ꣳ सर्व॑मसृजत। यदि॒दं किंच॑। [21]तथ्सृ॒ष्ट्वा। तदे॒वानु॒प्राविशत्। तद॑नु॒प्रवि॒श्य॑। सच्च॒ त्यच्चा॑भवत्। निरु॑क्तं चानि॑रुक्तं च। नि॒लय॑नं चानि॑लयनं च। वि॒ज्ञान॑ं चावि॑ज्ञानं च। स॒त्यं चा॑नृतं

---

तस्य पुनस्तपस्त्वेन अभिधानं सर्वार्थसिद्धिः तपोमूला इति दर्शयितुम्। एवं तदेव स्वेच्छयैव **सर्वमभवत्** यावत् किञ्चित् चेतनं अचेतनं च इदं परिदृश्यमानमिति ॥

[21]अत्रायमपरः प्रश्नः—यद्येवं देवस्तैस्तैर्भावैः परिणतो विक्रियेत कथमयं स्वे महिम्नि अक्षरे तिष्ठतीति। तत्रोत्तरं—तत्सृष्ट्वेति ॥ सर्वविकारेष्वविकृत एव अनुप्रविश्य विचित्रात्मा एवं तिष्ठतीति। तामेव विचित्रात्मकतां प्रपञ्चयति—तदनुप्राविश्येति। अयं व्यापी देवस्सर्वशरीरेषु अविकृत एवानुप्रविश्य तिष्ठन् विधरणप्रेरणविनियोगकारी सदादिभावेन[1] भावयंश्च तिष्ठतीति। तत्र द्वे ब्रह्मणो रूपे। एकं सत् सत्यम्। इतरत् **त्यत्** असत्यम्। तदुभयात्मकं सप्रपञ्चं ब्रह्म सत्यम्। वक्ष्यति च—'यदिदं किञ्च। तत् सत्यमित्याचक्षते' इति। पुनश्च द्वे रूपे सप्रपञ्चस्य ब्रह्मणो दर्शयति—निरुक्तं चाऽनिरुक्तं चेति। **निरुक्तं** निर्वक्तुं परिच्छेतुं शक्यं घटादि। विपरीतं **अनिरुक्तं** आकाशादि। **निलयनं** निलीयतेऽत्र द्रव्यान्तरेण तत् वृक्षादि। विपरीतं **अनिलयनं** महदादि। **विज्ञानं** विविधं ज्ञायमानं देवमनुष्यादि। विपरीतं **अविज्ञानं** मायादि[2]। **सत्यं** व्यक्तं अस्तित्वनिश्चयात्। **अनृतं** अव्यक्तं असत्सामान्यात्। एवमेतत्

---

[1]सदाऽग्निभावेन.

[2]मयादि.

च स॒त्यम॑भवत् । यदि॒दं किंच । तथ्स॒त्यमि॒त्याच॒क्षते । तद॒प्येष॒ श्लोको॑ भवति ॥ ३१ ॥ [22]अस॒द्वा इ॒दमग्र॑ आसीत् । [23]ततो॒ वै सद॑जायत । तदा॒त्मान॒ꣳ॒ स्वयम॑कुरुत । तस्मा॒त्तथ्सु॒कृतमु॒च्यत॒ इति । [24]यद्वै॒ तथ्सु॒कृतम् । र॒सो वै॒ सः । रस॒ꣳ॒ ह्येवायं॒ लब्ध्वाऽऽ-

---

सर्वं अभवत् सत्त्यशब्दवाच्यं सप्रपञ्चं ब्रह्म । तदेवाह— यदिदं किञ्च यथोक्तं व्यक्ताव्यक्तरूपं तत् सत्त्यमित्याचक्षते ब्रह्मविदः । एवं सप्रपञ्चस्य सत्त्व[1]निर्वचनं कृतम् । तद्भावेन[2] परिणतिमगात्[3] प्रपञ्चातीतम्[4] ॥

[22]असदित्यादि ॥ तदसत्त्वनिर्वचनम् इदं ब्रह्म अग्रे सृष्टेः प्राक् असत् अलब्धसद्व्यपदेशं आसीत् । ततः तस्माद्वस्तुनः सत् अजायत स्यामिति सङ्कल्पमकुरुत । तस्मात् परा प्रकृतिः प्रादुरभूत् । तस्मात् सदि[5]त्युच्यते इति ॥

[23]इदानीं तस्य स्वकृतत्वं निरुच्यते—तत् परं वस्तु स्वयमेव स्वेच्छामात्रसहायमेव सर्वं[6] आत्मानं सर्वचिदचिदुपादानं आत्मसमष्टि[ष्टिं]सप्रपञ्चं ब्रह्म अकुरुत स्वस्मात् प्रादुर्भवति । तस्मात् तत् सप्रपञ्चं ब्रह्म सुकृतं स्वकृतं उच्यते । स्वेन कृतं स्वकृतं; छान्दसं सम्प्रसारणम् ॥

[24]इदानीं तस्य रसत्वं निराह—स्वयं कृतं यत् वस्तु स रसः आनन्दमयः हि यस्मात् रसं तं लब्ध्वा आनन्दी भवति

---

[1]सत्त्य. [2]सद्भावेन. [3]मागात्. [4]प्रपञ्चादितत्त्वं. [5]सत्त्यमि. [6]सर्व.

नन्दी भवति । [25]को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति । [26]यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भव-

---

तस्मादयमानन्दमयः इति । तं हि देशं प्राप्य नन्दति **परस्य** सा आनन्दप्रभा तत्रेत्युक्तम् ॥

[25]इदानीं तदधीनात्मलाभत्वं सर्वविकाराणामाह—को हीति ॥ **को हि** नाम जन्तुः **अन्यात्** उच्छ्वस्यात् जीवेदिति यावत् । **को** वा **प्राण्यात्** चक्षुरादिवृत्तिमान् स्यात् । प्राणाः चक्षुरादयः, तद्वृत्तयो दर्शनादयः । कः पश्येत् कः शृणुयात् इत्यादि । यत् यदि **एष आनन्दमय आकाशो न स्यात्** आ समन्तात् काशत इत्याकाशः आनन्दो ब्रह्मोच्यते । तस्मिन् असति को वा प्राण्यात् । **एष ह्येवानन्दयाति** आनन्ददेशत्वात् । लेट्याडागमः । पुत्रपत्न्यादौ तदनुपङ्केणानन्दहेतुत्वभ्रम इत्येवकारेण दर्शयति । विद्वांस्तु तमेवानन्दं[1] मन्यते ॥

[26]इदानीं भयहेतुरप्ययमेवेति दर्शयितुं प्रथममभयहेतुत्वमाह—यदा हीति ॥ **यदा** अयमुपासकोऽदृश्यत्वादिगुणके आनन्दब्रह्मणि **एतस्मिन्** एतत्प्रकरणप्रतिपाद्ये **प्रतिष्ठां** स्थितिं **विन्दते** लभते **अभयमि**ति क्रियाविशेषणं निवृत्तसर्वभयां प्रतिष्ठां आनन्दब्रह्मणि प्राप्नोति अथ एवं सत्येव **सोऽभयं** प्राप्तो **भवति** अपवर्गप्राप्त्या न कुतश्चित् तस्य भयमित्यर्थः । उभयोपासक-

---

[1]वानन्दहेतुं.

**ति । [27]यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति । तत्त्वेव भयं विदुषो मन्वान-**

---

स्यापवर्ग[1] इति यत् प्रतिज्ञातं 'ब्रह्मविदाप्नोति परं' इति तदेवं साति समर्थितम् । तत्र **अदृश्यं** अतीन्द्रियत्वात् । **अनात्म्यं** अविशेषरूपं आत्मनि भवं आत्म्यं, यथा मृदादि घटादीनामात्मा । आत्मीया घटादय आत्म्याः । **अनिरुक्तं** परिच्छेत्तुमशक्यं दुर्निरूपत्वात् अनन्तत्वाच्च । **अनिलयनं** अनाश्रयं नान्यत् किञ्चिदस्मिन् निलीयत इति । एवं ईदृशत्वात् अस्य वस्तुनः अस्मिन् लब्धप्रतिष्ठस्य कुतो भयमिति ॥

[27]इदानीं भयहेतुत्वं दर्शयति—यदा हीति ॥ **यदा** त्वयमुपासकः **एतस्मिन्** ब्रह्मणि **अन्तरं** भेदं छिद्रं[2] **उत्कुरुते** उद्भावयति अलब्धप्रतिष्ठो व्याक्षिप्तचित्तो भवति **अथ** अनन्तरमेव **तस्य भयं भवति** अपवर्गाभावात् शैघ्र्यं कालाल्पत्वं ब्रुवता अरंशब्देन अन्तराल्पत्वमुच्यते अरं स्वल्पमप्यन्तरमिति । कपिलाकादित्वाच्छत्वविकल्पः । केचिदाहुः—अरं छिद्रं यदा उत्कुरुते कीदृशमन्तरं अन्तर्धानकरमानन्दस्वरूपस्येति । तत्त्वेवेति । **विदुषो** विवेकिनो **मन्वानस्य** मीमांसमानस्य **तदेव** ब्रह्म **भयं** भयहेतुः नान्यः कश्चित् चोरव्याघ्रादिः । विद्वान् मन्वानः एवं पश्यतीति यावत् । **तत्तु विदुषो मन्वानस्य** भयहेतुर्ब्रह्मेत्युपदिश्यते । विद्वान् भयहेतुस्सर्वस्याभयहेतुश्चेति पश्यति[3] । अविद्वांस्तु चोरव्याघ्रादिभयहेतुं वीर्यवित्ताद्यभयहेतुरिति मन्यते ॥

---

[1] उभयोपासकस्यैवा [2] छिद्रं वा. [3] भयहेतुं स्वस्याभयहेतुं रूपयति.

स्य । [28]तदप्येष श्लोको भवति ॥ ३२ ॥ भीषाऽ-स्माद्वातः पवते । भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चम इति । सैषाऽऽनन्दस्य मीमाꣳसा भवति । युवा स्यात्साधुयुवाऽध्यायि[1]कः । आशिष्ठो दृढिष्ठो बलिष्ठः । तस्येयं

[28]अथ यदुक्तं ब्रह्मैव भयहेतुरिति तद्दर्शयति—तदपि इति ॥ अस्मात् ब्रह्मणो भीषा भयेन वातः पवते सदागतिर्भवति । सूर्यः स्वकाले उदेति । अग्निश्चेन्द्रश्च स्वकाले कार्यं कुरुतः । मृत्युश्च पञ्चमो धावति शुद्धो मध्यस्थश्चेष्टते । यद्वा—जन्तुसकाशं काले गच्छति । पञ्चानां ग्रहणं प्राधान्यादेषां प्रदर्शनार्थं सर्वस्य । यदा ह्येतेऽप्येवं ब्रह्मप्रयुक्ताः तथा भयेन स्वकार्यं कुर्वन्ति तदा का कथा सर्वेषामिति श्रुत्यभिप्रायः ॥

[29]उक्त आनन्दो ब्रह्म ॥ इदानीं कीदृशस्स आनन्दः आनन्दी वा कीदृशः इत्यपेक्षायां प्रथममानन्दस्वरूपविचारणार्थं आनन्दमीमांसामवतारयति—सैषेति ॥ मीमांस्यते जिज्ञास्यते सोपपत्तिकं प्रतिपाद्यते आनन्दमयो यया सा आनन्दस्य मीमांसा एषा वक्ष्यमाणा 'युवा स्यात्' इत्यादिप्रबन्धात्मिका सेयमिदानीं प्रस्तूयत इत्यर्थः । युवा स्यादित्यत्र स्यादिति सम्भावनायां लिङ् । युवत्वादिगुणको यदि कश्चित् सम्भवेत् तस्य सम्बन्धी य आनन्दः स एको विशिष्टः निरतिशयो वा मानुष आनन्दः ततोऽधिको मनुष्याधिकारिणामानन्दो नास्ति । एवं मनुष्यप्रत्यायनार्थत्वात् शास्त्रस्य मनुष्यानन्दमेव प्रथमं दर्शयति—

[1]ध्याय.

**पृथिवी सर्वा वित्तस्य पूर्णा स्यात् । स एको मानुष आनन्दः । [30]ते ये शतं मानुषा आनन्दाः । स एको मनुष्यगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं मनुष्यगन्धर्वाणामानन्दाः । स एको देवगन्धर्वाणामानन्दः । श्रोत्रिय-**

---

**युवा** तरुणः आनन्दहेतुर्वयो दर्शितम् । **साधु** सम्यक् शुद्धसम्प्रदायः योऽध्येतव्यानि साङ्गेतिहासशास्त्रादीनि युवैवाधीते स **साधुयुवाध्यायिकः** । विद्यानन्दोऽयम् । **आशिष्ठः** आशुतमः विधेयशरीरः । शरीरानन्दोऽयम् । इष्ठनि 'टेः' इति टिलोपः । केचिदाहुः—**आशिष्ठः** आशितृतमः भोगानन्दवान् । आशितृशब्दादिष्ठनि 'तुरिष्ठेमेयस्सु' इति लोपः । **दृढिष्ठः** दृढतमः आरोग्यानन्दवान् । **बलिष्ठः** बलवत्तमः महाबलः बलानन्दवान् । अथ **तस्य** तादृशस्य यथोक्तवयःप्रभृतिहेतुकानन्दशालिनः पुंसः **इयं पृथिवी सर्वाऽपि** स्वभूता यदि **स्यात्** कीदृशी **वित्तस्य पूर्णा** गोभूमिहिरण्यगजाश्वादिभिर्धनैः सर्वतस्समृद्धा महापृथिवी स्वभूता स्यात् पृथिवीश्वर इति यावत् । 'पूरणगुण' इति समासप्रतिषेधेन षष्ठी ज्ञापिता । **स एक इति** । व्याख्यातम् ॥

[30]ते य इति ॥ तादृशमानुषानन्दशतसम्मितः **मनुष्यगन्धर्वाणां एकः** प्रशस्तः निरुपमो वा **आनन्दः** निरुत्ववाचकश्शब्दः [निरुपमत्ववाची एकशब्दः][1] गन्धर्वा गायकाः मनुष्यधर्माणो गन्धर्वा मनुष्यगन्धर्वाः । मनुष्या वा गन्धर्वत्वं प्राप्ताः । देवसध-

---

[1]बहुत्ववाची वा शब्दः.

स्य चाकामंहतस्य । [31]ते ये शतं देवगन्धर्वाणामानन्दाः । स एकः पितृणां चिरलोकलोकानामानन्दः । श्रोत्रियस्य चाकामंहतस्य । ते ये शतं पितृणां चिरलोकलोकानामानन्दाः । स एक आजानजानां देवानामानन्दः । श्रोत्रियस्य चाकामंहतस्य । ते ये शतमाजानजानां देवानामानन्दाः । स एकः कर्मदेवानां देवानामानन्दः । ये कर्मणा देवानपि यन्ति । श्रोत्रियस्य चाकामंहतस्य । ते ये शतं कर्मदेवानां देवानामानन्दाः । स एको दे-

---

र्माणो देवगन्धर्वाः गन्धर्वजातीया वा विश्वावसुप्रभृतयः । श्रोत्रियः अधीतस्वशाखः कामनया यः कर्माणि करोति स कामहतः तद्विपरीतः अकामहतः काम्यैः कर्मभिः श्रोत्रियो हन्यते इति कामहतः । काम्येष्वप्रवृत्तिर्न्याय्येति गम्यते । नित्यानित्यकामनयैव कर्तव्यानि न त्याज्यानि ।

काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।*

इति । तस्य अकामहतस्य ब्रह्मणा तुल्य आनन्दः । तस्य पुनः पुनरर्वाचीनानन्दसमुच्चयस्तु तद्भूमिकारूढस्य योगिनः तत्तदानन्दाविर्भावख्यापनार्थः । ब्रह्मानन्दे वा आनन्दानामन्तर्भावः ।

[31]चिरकालं लोक्यते भोगाय तिष्ठति यो लोकः स चिरलोकः । लोक्यत इति लोकः । तादृशो लोको येषां पितृणां ते चिरलोक-

---

*भगव. १८-२.

वानांमानन्दः । श्रोत्रियस्य चाकामंहतस्य । ते ये शतं देवानांमानन्दाः । स एक इन्द्रस्यानन्दः । श्रोत्रियस्य चाकामंहतस्य । ते ये शतमिन्द्रस्यानन्दाः । स एको बृहस्पतेरानन्दः । श्रोत्रियस्य चाकामंहतस्य । ते ये शतं बृहस्पतेरानन्दाः । स एकः प्रजापतेरानन्दः । श्रोत्रियस्य चाकामंहतस्य । [32]ते ये शतं प्रजापतेरानन्दाः । स एको ब्र-

लोकाः । आवृत्यावृत्य जायन्ते अधिकरणेष्विति आजानाः मन्वन्तराणि ब्रह्मदिनम् । चतुर्दशसु तेषु जाताः आजानजाः देवानां परिचारका माध्यमिकादयः । ये कर्मसामर्थ्येन अदेवा एव सन्तो देवानपियन्ति अनुप्रविशन्ति देवत्वं प्राप्ताः । देवाः देवजातीया वस्वादयः । इन्द्रो देवानां राजा । बृहस्पतिः इन्द्रपुरोहितः । प्रजापतिः त्वष्टा हिरण्यगर्भः स्वयम्भ्वादिः[1] यस्य एकस्मिन्नहनि चतुर्दश मन्वन्तराणि ॥

[32]ब्रह्म विश्वाधिकं वस्तु यस्यानन्दो व्योमानन्दः । व्योमाभिधानं आनन्दब्रह्म । स च आनन्द एकः तुल्यश्च ब्रह्मणो मुक्तानां च । तदाह—स यश्चायमिति । पुरुष उपासको मुक्तावस्थ उच्यते । आदिभूतं परं वस्तु आदित्यशब्देनोच्यते । छान्दसस्त्यप् । तयोः एकः तुल्यः आनन्दः प्रभुत्वस्त्रष्टृत्वादि[2]साम्यात् । केचिदाहुः—'अन्नात् पुरुषः' इति प्रक्रान्तोऽन्नपरिणामः पुरुषो गृह्यते । तस्मिंश्च परे परिणामे आदिभूते ब्रह्मणि

[1]स्वायम्भुवादिः. [2]समत्वादि.

ह्मणं आनन्दः । श्रोत्रियस्य चाकामहतस्य । स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । [33]स य एवं वित् । अस्माल्लोकात्प्रेत्य । एतमन्नमयमात्मानमुपसंक्रामति । एतं प्राणमयमात्मानमुपसंक्रामति । एतं मनोमयमात्मानमुपसंक्रामति । एतं विज्ञानमयमात्मानमुपसंक्रामति । एतमानन्दमयमात्मानमुपसंक्रामति । तदप्येष श्लोको भवति ॥ ३३ ॥ [34]यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभे-

---

स एवानन्दः यत् 'आनन्दो ब्रह्म' इति गीयते । आनन्दविशेषास्त्वौपाधिका एव तच्छकलभूता इति ॥

[33]स य इति ॥ एनं ब्रह्मानन्दं यथोक्तस्वभावं **यो** वेद स एवं वेदिता उपासकः अस्मात् **लोकात्** संसारित्वस्वभावात् प्रेत्य गत्वा एतं स्वभावं हित्वा एतान् पूर्वोक्तानन्नमयादीन् पञ्च ब्रह्मकोशान् क्रमेण उपसङ्क्रामतीति । एकत्वेनोपासिता क्रमेण तत्तद्भावं प्राप्नोति ततो वशीकृतपञ्चकोशो ब्रह्मानन्दे तिष्ठति ॥

[34]इदानीं तामवस्थां दर्शयितुमाह—तदपीति ॥ यतो वाच इत्यादिका व्याख्याता । 'कुतश्चन' इति विशेषः । अयं ब्रह्मानन्दं प्राप्तो योगीभूतः **कुतश्चिदपि** अपायहेतोः **न बिभेति**

**ति कुतश्चनेति । [35]एतꣳ ह वाव न तपति । किमहꣳ साधु नाकरवम् । किमहं पापमकरवमिति । [36]स य एवं विद्वानेते आत्मानꣳ स्पृणुते । उभे ह्येवैष**

यस्य आनन्दमपि विद्वान् किं पुनस्तद्विद्वानिति भावः । एवं 'ब्रह्मविदाप्नोति परं' इति प्रक्रान्तं समर्थितम् ॥

[35]एतं हेति ॥ एतं विद्वांसमुपासकं **न तपति** न दुःखयति न खेदयति चिन्ता । किमहमिति । किं कर्तव्यं **साधु** कर्म अथ **अहं नाकरवं** न कृतवानस्मि **किं** वा अकर्तव्यं **पापं** कर्म अकरवं कृतवानस्मि इतीयं चिन्ता एवंविधं न तपति विधिनिषेधाविव तं न स्पृशत इति वेदनप्रशंसार्थम् । त्रैगुण्यातीतस्य मुक्तात्मनः तयोरसम्भव एव ॥

[36]स य इत्यादि ॥ **य** उपासकः एवं एतस्मिन् ब्रह्मणि यथोक्तप्रभावे[1] आनन्दादिलक्षणे वेद **स** एव **विद्वान् आत्मानं स्पृणुते** प्रीणयति अनेकजात्यन्तरार्जितानन्तानुपभुक्तसमस्तकर्मयुगपत्प्रक्षयकारणब्रह्मैकतानताविशदं स[2]मुन्मिषद्भयता[3]-समासादितस्वाराज्यमिवानन्त[4]मात्मानं करोति । स्पृ प्रीतौ सौवादिकः । इदानीं ब्रह्माद्वयेनात्मन ऐक्यं प्रतिपादितुमाह—उभे हीति । किमुच्यते 'आत्मानं स्पृणुते' इति । ननु एवं विद्वान् **एष** उपासकः **उभे एते ब्रह्मणी** एव **स्पृणुते आत्मानं** आत्माभिन्ने आत्मैक्येन स्थिते स्पृणुते न केवलमात्मानमेव । एवं विदुष उपासकस्य पूर्वं स्तुतिः कृता । इयं

[1]प्रकारे. [2]विशदस. [3]दभयतां. [4]स्वाराज्यं मर्दयन्त.

एते आत्मानꣳ स्पृणुते। य एवं वेद। इत्युपनिषत्॥ ३४

ब्रह्मविदिदमयमिदमेकाविꣳशतिरन्नादन्नꣳरसम-यात्प्राणो व्यानोऽपान आकाशः पृथिवी पुच्छꣳ षड्विꣳशतिः प्राणं यजुर् ऋक्सामादेशोऽथर्वाङ्गि-रसः पुच्छं द्वाविꣳशतिर्यतंश्श्रद्धर्तꣳ सत्यं योगो महोऽष्टादश विज्ञानं प्रियं मोदः प्रमोद आनन्दो ब्रह्म पुच्छं द्वाविꣳशतिंरसंन्नेवाथाष्टाविꣳशतिरस-श्षोडश भीषाऽस्मान्मानुषो मनुष्यगन्धर्वाणां दे-वगन्धर्वाणां पितृणां चिरलोकलोकानामाजान-जानां कर्मदेवानां ये कर्मणा देवानामिन्द्रस्य बृह-स्पतेः प्रजापतेर्ब्रह्मणस्स यश्चं संक्रामत्येकंपञ्चाश-द्यतः कुतश्च नैतमेकादश नव ॥ १४ ॥

---

तु वेदितृमात्रस्य स्तुतिः । य एवंप्रभावे उभे ब्रह्मणी वेदि-तव्ये वेद अपि नोपास्ते एषोऽपि हि उभे एते ब्रह्मणी आ-त्मानं स्पृणुते एव ब्रह्मद्वयात्मकं वा आत्मानं स्पृणुत एव किं पुनरुपासकः । इति इयमतिक्रान्ता ब्रह्मविद्या या उपनिषत् परवस्तुनस्समीपे निषीदति न बहिस्तिष्ठति न चातत्त्वस्वरूपं स्पृशतीति । समाप्तौ वा इतिशब्दः—एतावत्यध्वनि उपनि-षदुपरमतीति । वेद्यानन्दमहिमोपवर्णनामतीत्यापि अस्य पर-मस्यानन्दिनो वस्तुनः स्वरूपं न मया विज्ञातमित्येतावत्येवोपर-म्यत इति वेदात्मनोऽभिप्रायः ॥

इत्यारण्यके उपनिषत्सु पञ्चमे चतुर्दशोऽनुवाकः.

———o———

[1]भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तस्मा एतत्प्रोवाच । अन्नं प्राणं चक्षुश्श्रोत्रं मनो वाचमिति । [2]तꣳ होवाच । यतो वा इमानि भूतानि जायन्ते । येन जातानि

[1]अथ शरीरासन[1]मुपासनान्तरं विधातुमारभते—भृगुर्वा इत्यादि ॥ भृगुर्नाम ऋषिर्वरुणनाम्नः ऋषेरपत्यं स निजं पितरं वरुणं ब्रह्मजिज्ञासुः उपससार उपधावति स्म । हे भगवः! भगवन्! ब्रह्म अधीहि अधिगमय मां ब्रह्म । अन्तर्भावितण्यर्थ एतिः । 'बहुलमन्यत्रापि संज्ञाछन्दसोः' इति णिलुक् । भगवतस्संबुद्धौ 'मतुवसोः' इति रुत्वम् । तस्मै भृगवे उपसृताय च ब्रह्म विजिज्ञासमानाय एतत् अन्नादिषट्कं ब्रह्मत्वेन प्रोवाच पिता । विनश्वरत्वान्नेदं ब्रह्म नेदं ब्रह्मेति विप्रतिपन्नाय पुत्रायान्नमयादिषट्कमनुक्रमेण कतिपयब्रह्मगुणवत्तया प्रोवाच । यद्वा—ब्रह्मप्राप्तिहेतुत्वात् तेषां ब्रह्मत्वोपचारः, ब्रह्म जिज्ञासमानाय पुत्राय तत्प्राप्तिहेतूंस्तावत् उपदिदेश । अन्नं शुद्धं प्राणादीनि इन्द्रियाणि च संयतानि ब्रह्म ; शुद्धान्नैस्संयतेन्द्रियैश्च तत् ब्रह्म प्राप्यमिति ब्रह्मप्राप्तिसाधनकथनमिति[2] ॥

[2]अथ अतिव्याप्त्या तेनातृप्तं पुत्रं ज्ञात्वा समीचीनमव्याप्त्यतिव्याप्तिरहितं लक्षणं दर्शयितुमाह—तं हेति ॥ उपसर्गार्थो लक्षणोपदेशः न तु ज्ञानार्थः । गुरूपदेशेनैव ब्रह्मणो ज्ञातत्वात्[3] । तं उक्तेऽर्थे विप्रतिपन्नबुद्धिं पुत्रं पिता उवाच इमानि भूतानि

[1] शरीरगत. [2] प्राप्तिसाधनमिति. [3] ज्ञातव्यमागतं.

**जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥ ३५ ॥ अन्नं ब्रह्मेति व्यजानात् । अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते । अन्नेन जातानि जीवन्ति । अन्नं प्रयन्त्यभिसंविशन्तीति । [3]तद्विज्ञाय । पुनरेव**

---

उत्पत्तिकाले **यतो जायन्ते** प्रादुर्भवन्ति अथ **जातानि येन** हेतुना **जीवन्ति** म्रियन्ते अथ इमानि भूतानि **प्रयन्ति** उपसंहारकाले प्रायणं तिरोधानं प्रतिपद्यमानानि । कृदुत्तरपदप्रकृतिस्वराभावश्छान्दसः । विनाशकाले प्रयतानि भूतानि **यदभिसंविशन्ति** अनुप्रविशन्ति यत्र प्रलीयन्ते तादृग्लक्षणं वस्तु **विजिज्ञासस्व** विज्ञातुमिच्छ यतस्व । अथ यदीदृग्लक्षणमवगच्छसि तत् **ब्रह्म इति** विद्धीति निश्चित्य पित्रोक्तः **सः** श्रुतब्रह्मलक्षणो भृगुः तपोमूलत्वात्सर्वसिद्धीनां इन्द्रियसंयमस्य च ब्रह्मप्राप्तिहेतुत्वेनोक्तत्वात् विज्ञातुकामः प्रथमं **तपोऽतप्यत** यमनियमादिपरोऽभवत् । अथ यथोक्तक्रियात्रयान्वयात्मकब्रह्मलक्षणसद्भावात् **अन्नं ब्रह्म इति** विज्ञातवान् । अन्नाद्धीत्यादिना तदेव समर्थयते । अन्नपरिणामशुक्लहेतुत्वात् **जायन्ते** अन्नमयादात्मनो जायन्ते अन्नरसेन म्रियन्ते प्रायणकाले अन्नमेव **अभिसंविशन्ति** पृथिव्याद्युपादानत्वादन्नस्य तत्पूर्वावस्था पृथिव्यन्नमुच्यते । तत्र सर्वा मूर्तयः प्रलीयन्त इति ॥

[3]अथ. अन्नं ब्रह्मेति **विज्ञाय** तथा ध्यायन् अन्नमयप्रहाणेन प्राणमयोपसङ्क्रमणश्रुतेर्नैतावदेव ब्रह्म नश्यति चान्नमिति **विज्ञाय**

वरु॑णं पि॒तर॒मुप॑स्ससार । अधी॑हि भगवो॒ ब्रह्मेति॑ । तꣳ होवाच । तप॑सा ब्रह्म॒ विजि॑ज्ञासस्व । तपो॒ ब्रह्मेति॑ । [4]स तपो॑ऽतप्यत । स तप॑स्त॒प्त्वा ॥ ३६ ॥

प्रा॒णो ब्रह्मे॒ति॒ व्य॑जानात् । [5]प्रा॒णाद्ध्ये॑व खल्वि॒मा॒नि॒ भू॒तानि॒ जाय॑न्ते । प्रा॒णेन॒ जा॒तानि॒ जीव॑न्ति । प्रा॒णं प्रय॑न्त्य॒भि सं॑विश॒न्तीति॑ । [6]तद्वि॒ज्ञाय॑ । पुन॑रे॒व वरु॑णं पि॒तर॒मुप॑ससार । अधी॑हि भगवो॒ ब्रह्मेति॑ । तꣳ होवाच । तप॑सा ब्रह्म॒ विजि॑ज्ञासस्व । तपो॒ ब्रह्मेति॑ । स तपो॑ऽतप्यत । स तप॑स्त॒प्त्वा ॥ ३७ ॥

---

पुनरेव ब्रह्म जिज्ञासुः **वरुणं पितरमुपससार** गतवान् **अधीहि भगवो ब्रह्मेति** । अथ तादृशं तपोनिष्ठं पुत्रं ज्ञात्वा पिता उवाच **तपसैव ब्रह्म विजिज्ञासस्व** अहमपि तपसैव ब्रह्म विज्ञातवान् त्वं च तपोनिष्ठोऽसि **तप** एव ब्रह्मज्ञान[1]कारणमिति ॥

[4]**स तपोऽतप्यत** इत्यादि ॥ गतम् ॥

[5]**प्राणाद्धि** इत्यादि ॥ प्राणमयाद्भूतान्युत्पद्यन्ते तदधीनत्वादन्नमयस्य तेनैव म्रियन्ते । तमेव संहारकाले अभिविशन्ति पृथिव्यप्तेजसां वायौ संहारात् ॥

[6]तद्विज्ञायेत्यादि ॥ गतम् ॥

---

[1]सर्वज्ञान.

मनो ब्रह्मेति व्यजानात् । [7]मनसो ह्येव खल्विमानि भूतानि जायन्ते । मनसा जातानि जीवन्ति । मनः प्रयन्त्यभि संविशन्तीति । [8]तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोतप्यत । स तपस्तप्त्वा॥ २८॥ विज्ञानं ब्रह्मेति व्यजानात् । [9]विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते । विज्ञानेन जातानि जीवन्ति । विज्ञानं प्रयन्त्यभि संविशन्तीति । [10]तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोतप्यत । स तपस्तप्त्वा॥ २९॥ आनन्दो ब्रह्मेति व्यजानात् । [11]आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आ-

---

[7]मनसो हीत्यादि ॥ मनोमयाद्भूतानि जायन्ते प्राणमयस्यापि तद्धेतुत्वात् तेनैव ध्रियन्ते तमेव संहारकाले अभिसंविशन्ति तत्रैव लीयन्ते च वायोरपि मनसि प्रलयात् ॥

[8–10]स्पष्टमन्यत् ॥

[11]आनन्दाद्ध्येवेति ॥ 'स एको ब्रह्मण आनन्दः'* इत्युक्तो यो ब्रह्मण आनन्दः तस्मात् भूतानि जायन्ते तस्य विश्वो-

---

*तै. आ. ९-१४-३३.

**नन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्तीति । [12]सैषा भार्गवी वारुणी विद्या । परमे व्योमन्प्रतिष्ठिता । य एवं वेद प्रति तिष्ठति । अन्नवानन्नादो भवति । महान्भवति प्रजया पशुभि-**

---

पादानत्वात् विज्ञानमयस्यापि तत उत्पत्तेः । **तेन जीवन्ति** स्थितिहेतुत्वात् । अथ तत्रैव विलीयन्ते विज्ञानमयान्तस्य कृत्स्नस्य तत्रैव लयात् ॥

[12]**सैषेति** ॥ आनन्दब्रह्मणि यथोक्तलक्षण[1]दर्शनात् इदमेव भृगुणाऽध्यवसितम् । तस्य चानन्दिना अभेदेन विनाशाभावात् आनन्दिष्विव न बाधा समजनि । तस्मात् **सैषा** अनुक्रान्ता **भार्गवी** भृगुणा गृहीता वरुणेन प्रोक्ता ब्रह्मविद्या **परमे व्योमन्** परस्मिन् व्योम्नि विविधरक्षणे आकाशरूपत्वात् विविधतर्पणे वा आनन्दरूपत्वात् तत्रैव **प्रतिष्ठिता** स्थितिं लभते न ततः परं आनन्दिनं धर्मिणं मृगयते स्म आनन्दविभूतिवर्णनमात्रतृप्ता तत्रैव पर्यवसिता बभूवेत्यर्थः । **य एवं** आनन्दविभूतिं **वेदा**पि स च प्रतिष्ठां लभते नोपासितैव । 'ब्रह्म पुच्छं प्रतिष्ठा'* इति परं ब्रह्म प्रतिष्ठा तत्रैव स्थितिं लभते आनन्दब्रह्मणोऽपि प्रतिष्ठाभूतं परं प्राप्नोति । आनन्दं ब्रह्मणो विदित्वोपासीतेति इयं प्रथमोपासना । यदुक्तं 'ब्रह्मविदाप्नोति परम्'† । इति विभूतेर्विदित्वोपासनमेव परस्योपासनमिति तद्विभूतिपर्यवसितैषा विद्या । इदानीं तस्यानुषङ्गिकाणि फलान्यैहिकान्यपि सन्तीत्याह—**अन्नवानित्यादि** ।

---

[1] यथोक्तब्रह्मलक्षण. * आ. ५-१४-३०. †आ. ५-१४-२६.

**ब्रह्मवर्चसेन । महान्कीर्त्या ॥ ४० ॥ [13]अन्नं न निन्द्यात् । तद्व्रतम् । प्राणो वा अन्नम् । शरीरमन्नादम् । प्राणे शरीरं प्रतिष्ठितम् । शरीरे प्राणः प्रतिष्ठि-**

यद्यन्नादि कामयते तदा **अन्नवान्** बह्वन्नो भवति । **अन्नादः** यावदाभिलषितमन्नमत्तुं समर्थः भवति । प्रजादिचतुष्टयेन **महान्** समृद्धो भवति 'सोऽश्नुते सर्वान्कामान्'* इति अवरुद्वैवोपासकस्य कामानामवाप्तिः ॥

[13]इदानीमुक्तस्य आनन्दस्य साक्षात्परम्परया वा अन्नाधीनत्वात्तदेव स्तोतुमारभते—**अन्नं न निन्द्यादिति** ॥ वाचा मनसा वा कुत्सा निन्दा तामन्नस्य न कुर्यात् निन्द्यमानस्यान्नं नास्तीत्यर्थः । निन्दितमपि न निन्देदित्येके । निन्दितुः आत्मैव निन्दितस्स्यात् । तथावर्तनमानस्य **तत्** अन्नं **व्रतं** व्रतनीयं तन्मात्रमेव व्रतनीयम् । तथा वृत्तिरेवास्य व्रतं नियम इति केचित् । अपर आहुः—आनन्दभूमिकामधिरूढोपि उपासकोऽन्नं न निन्द्यात् न परिहरेत् । वर्जयेत् योगोपसर्गं मन्वीत यस्मात् तदस्य व्रतं उपासना योगस्य व्रतोपायनस्थानीया तत् तस्मात् अन्नं न त्याज्यमिति प्रथमोपासना इदानीं तस्य स्थितत्वात् । अथ अन्नमयं शरीराख्यं तस्य तत्र तदधीनत्वात् तस्मात् **प्राणः** । **प्राण** एव **शरीरं प्रतिष्ठितं** तदधीनस्थितिकत्वात् । **शरीरे** तद्विधारकत्वेन प्रतिष्ठितः प्राणमयः । तस्मादेवं महानुभावं कथमन्नं परिहरेदिति । या एवं प्राणशरीरयोरन्योन्यस्मिन् प्रतिष्ठा सैषा अन्ने अन्नस्य प्रतिष्ठेत्युपासितव्या ॥

*आ. ५-१४-२६.

तः । तदेतदन्नमन्ने प्रतिष्ठितम् । [14]स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रति तिष्ठति । अन्नवानन्नादो भवति। महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान्कीर्त्या ॥ ४१ ॥ [15]अन्नं न परिचक्षीत । तद्व्रतम् । [16]आपो वा अन्नम् । ज्योतिरन्नादम् । अप्सु ज्योतिः प्रतिष्ठितम् । ज्योतिष्यापः प्रतिष्ठिताः । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रति तिष्ठति । अन्नवानन्नादो भवति । महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान्कीर्त्या ॥ ४२ ॥

---

[14]स इत्यादि ॥ एवं अन्योन्यस्मिन् प्रतिष्ठितं प्राणशरीरात्मकं अन्नद्वयं यो वेदापि विदित्वोपास्ते स प्रतितिष्ठति परमां प्रतिष्ठां प्राप्नोति—आनुषङ्गिकान्नवत्त्वात् ऐहिकफलवान् भवति । एवं महाभाग्यवर्णनया आनन्दस्यैव स्तुतिः क्रियते आऽन्तादनुवाकस्य ॥

[15]**अन्नं न परिचक्षीतेति** ॥ इदं भोजनीयं अभोजनीयमिति विमतिपुरस्सरं न प्रतिषेद्धव्यम् । अन्नं परिचक्षाणेन शरीरमेव परिख्यातं स्यात् । तद्व्रतमिति स एवार्थः ॥

[16]अथ तृतीयोपासनं विधीयते—**आपो वा इत्यादि** ॥ **आपः अन्नं** तन्निष्पत्तिहेतुत्वात् अद्यमानत्वाच्च सर्वैः । **ज्योतिः** आदित्यः अन्नादः रश्मिभिर्ग्रसन् अप्सु **प्रतिष्ठितं** ज्योतिः वैद्युतोऽग्निः तदुत्पत्तौ व्यापृतत्वात् । **ज्योतिषि** आत्मनि **आपः प्रतिष्ठिताः** गर्भत्वेन रश्मिषु स्थितत्वात् । एवं अग्नीषोमात्मकं विश्वमन्नमयात्मकमिति विदित्वा उपासीत इति । गतमन्यत् ॥

[17]अन्नं बहु कुर्वीत । तद्व्रतम् । [18]पृथिवी वा अन्नम् । आकाशोऽन्नादः । पृथिव्यामाकाशः प्रतिष्ठितः । आकाशे पृथिवी प्रतिष्ठिता । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रति तिष्ठति । अन्नवानन्नादो भवति । महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान्कीर्त्या ॥ ४३ ॥
[19]न कंचन वसतौ प्रत्याचक्षीत । तद्व्रतम् । [20]तस्मा-

---

[17]तृतीयामुपासनां कुर्वन् अन्नं बहु कुर्वीत भूयिष्ठमुपपादयेत् बहु मन्वीत वा सर्वमन्नं तथा कुर्वन् आत्मैवात्मना भूमानं गमितो भवति । तद्व्रतमिति समानम् ॥

[18]अथ चतुर्थीमुपासनां विदधाति—पृथिवी वा अन्नमित्यादि ॥ पृथिवी अन्नं सर्वान्नोपादानत्वात् । आकाशोऽन्नादः निजोदरनिहितत्वात् पृथिव्यवकाशानाम् । आकाशे पृथिवी प्रतिष्ठिता तदुदरवर्तित्वात् । तदित्यादि । एवं द्यावापृथिव्यात्मकान्नद्वयव्याप्तसमस्तावकाशं विदित्वोपासीतेति । समानमन्यत् ॥

[19]एतां चतुर्थीमुपासनां कुर्वन् न कञ्चिदपि वसतौ अविद्वांसमपि वसतौ वसतिनिमित्तमागतं अवकाशार्थिनं न प्रत्याचक्षीत । प्रत्याचक्षाणोऽप्यात्मानमेव प्रत्याचक्षीत । सर्वावकाशव्यापकान्नद्वयात्मकमात्मानं भावयेत् । कथमात्मानमेव प्रत्याचक्षीत । तद्व्रतमिति तुल्यम् ॥

[20]तस्मादित्यादि ॥ यस्मात् अन्ननामिकां भूमिकामारूढेन कश्चिदपि वासार्थी न प्रत्याख्येयः वसता च अश्नता च वस्तव्यं

**द्यया कया च विधया बह्वन्नं प्राप्नुयात्। अराध्यस्मा अन्नमित्याचक्षते। एतद्वै मुखतोऽन्नꣳ राद्धम्। मुखतोऽस्मा अन्नꣳ राध्यते। एतद्वै मध्यतोऽन्नꣳ राद्धम्। मध्यतोऽस्मा अन्नꣳ राध्यते। एतद्वा अन्ततोऽन्नꣳ राद्धम्। अन्ततोऽस्मा अन्नꣳ राध्यते। य एवं वेद। [21] क्षेम इति वाचि। योगक्षेम इति प्राणापानयोः। कर्मेति हस्तयोः। गतिरिति पादयोः।**

इतरथा दोषप्रसङ्गात् श्रुतेः यथा 'किं प्रथमां रात्रिमाश्नाः'* इत्यादि। तस्मात् यया कया च विधया प्रकारेण प्रतिषिद्धेनापि कर्मणा **बह्वन्नं प्राप्नुयात्** सम्भृत्य निदधीत उपासनासामर्थ्यान्न दोषो भवति। तदेवाह—अराधीति। संसिद्धं उपासनाबलेन सम्पन्नं **अस्मै** एतदर्थतया सर्वमन्नं तस्मात् शूद्राद्यन्नमपि एतदीयमेवेति ब्रह्मवादिन आचक्षते। किञ्च—एतत्खलु उपासनाबलराद्धमन्नं मुखतो मध्यतोऽन्ततश्च राद्धं बालत्वं युवत्वं स्थविरत्वं शरीरावस्थात्रयसंसिद्धं नान्नान्तरवदेकैकावस्थोपलक्षणम्। यद्वा—त्रिष्वपि कालेषु राद्धं न तु कादाचित्कम्। एवं वेदित्रेऽपि मुखतो मध्यतोऽन्ततश्च अन्नं राद्धं भवति नोपासितुरेव॥

[21]पुनरप्यानन्दोपासनाविशेषं दर्शयति—क्षेम इत्यादि॥ **वाचि** शब्दे च आनन्दः क्षेम इत्युपासीत। क्षेमः सुखम्। स्वयं क्षेमवान् भवति। यद्वा—प्राणादिष्वन्नभावनामिव वाचि क्षेमभावनां भावयन् भवति योगिनो वागायत्तत्वात् सुखानाम्।

*ब्रा. ३-११-८.

**विमुक्तिरिति पायौ । इति मानुषीस्समाज्ञाः । अथ दैवीः । तृप्तिरिति वृष्टौ । बलमिति विद्युति यश इति पशुषु । ज्योतिरिति नक्षत्रेषु । प्रजातिरमृतमानन्द इत्युपस्थे । सर्वमित्याकाशे । [22]तत्प्रतिष्ठेत्युपासीत । प्रतिष्ठावान्भवति । तन्मह इत्युपासीत । महान्भवति । तन्मन इत्युपासीत । मानवान्भवति । तन्नम इत्युपासीत । नम्यन्तेऽस्मै कामाः । तद्ब्रह्मेत्युपासीत । ब्रह्मवान्भवति । तद्ब्रह्मणः**

यत्रयत्र येनयेन रूपेणानन्दं ब्रह्मोपास्ते तत्रतत्र तद्रूपस्संपद्यत इति भावः । एवमुत्तरेष्वपि द्रष्टव्यम् । अलब्धाभिमतलाभो योगः तद्धेतुः प्राणः उद्यमरूपत्वात् । लब्धस्य पालनं क्षेमः तद्धेतुरपानः उपसंहाररूपत्वात् । योगसहितः क्षेमः योगक्षेमः । कर्मनिमित्तं हस्तौ, गतिनिमित्तं पादौ, विरेचनस्थानं पायुः इति एता मानुषीः मानुष्यः मनुष्यशरीरावयवपराः समाज्ञाः । तृप्तिहेतुः वृष्टिः बलवन्मेघसङ्घट्टनजन्मा विद्युत् । यशोहेतवः पशवः । ज्योतिष्मन्ति नक्षत्राणि । प्रजातिः प्रजाः अमृतं आत्मनोऽमृतत्वं प्रजात्वेनावस्थानं यथा 'तदु ते मर्त्यामृतं'* इति । आनन्दः सुखम् । एतत्त्रयहेतुः उपस्थः । सर्वतत्त्वमूर्तीनां प्रलयात् महत्त्वाच्च । तत्र सर्वत्रात्मत्वेन ब्रह्मत्वेनोपासिता स्वयमपि सर्व एव ॥

[22]पुनश्च काम्यानुपासनाभेदानाह—तदित्यादि ॥ प्रतिष्ठारूपेण तत् आनन्दं ब्रह्म उपासीत प्रतिष्ठादिमान् भवति ब्रह्मात्मक-

*ब्रा. १-५-५.

**परिमर इत्युपासीत । पर्येणं म्रियन्ते द्विषन्तस्सपत्नाः । परि येऽप्रिया भ्रातृव्याः । [23]स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स य एवं वित् । अस्माल्लोकात्प्रेत्य । एतमन्नमयमात्मानमुप संक्रम्य । एतं प्राणमयमात्मानमुप संक्रम्य । एतं मनोमयमात्मानमुप संक्रम्य । एतं विज्ञानमयमात्मानमुप संक्रम्य । एतमानन्दमयमात्मानमुप संक्रम्य । इमान्लोकान्कामान्नी कामरूप्यनु संचरन्न् । एत-**

---

त्वात् । तस्य प्रतिष्ठा क्षेत्रपश्वादिपौष्कल्यम् । महः पूजा महत्त्वं वा । मनः मननं बहुमानो वा । नमः प्रह्वीभावः । कामाः अस्मै स्वयमेव संनम्यन्ते । ब्रह्म बृंहणं प्रपञ्चोन्मेषः बृंहणवान् भवति । शब्दब्रह्मणो वा ग्रहणम् । परितः सर्वतः म्रियन्ते सर्वेऽप्यस्मिन् इति वा परिमरः महार्थसंहारः परं ब्रह्मण आकारः[1] । यद्वा—प्रपञ्चब्रह्मणः परितो नाशः परिमरः । तद्भावेनानन्दब्रह्मण उपासितारं **एणं** एनं छान्दसं णत्वं एनं परि लक्षीकृत्य तत्पार्श्वमागत्य म्रियन्ते द्विषन्तः सपत्नाः ईर्ष्यारः शत्रवः ये चान्ये अप्रियाः भ्रातृव्याः द्वेष्यभूताः शत्रवः ते च **परिम्रियन्ते** ॥

[23]स यश्चायं इति ॥ व्याख्यातम्* । **एवं** इत्थं विद्वान् उपासकः अस्माल्लोकात् प्रेत्य अन्नमयादीन् कोशान् उपसङ्क्रम्य तदात्मतया वशीकारं लब्ध्वा इमान् तदुपादानान् लोकान्

---

[1]परब्रह्मण आधारः

*आ. ५-१४-३३.

**थ्साम गायन्नास्ते । [24]हा३ वु हा३ वु हा३ वु । अह-मन्नमहमन्नमहमन्नम् । अहमन्नादो३ऽहमन्नादो३-ऽहमन्नादः । अहꣳ श्लोककृदहꣳ श्लोककृदहꣳ श्लो-ककृत् । अहमस्मि प्रथमजा ऋता३स्य । पूर्वं दे-**

---

अनुसञ्चरन् यत्रयत्र इच्छति तत्रतत्रानुक्रमेण सञ्चरन् कामान्नी यथाऽभिलषितादनशक्तिः कामरूपी यथाभिलषितरूपपरिग्रहसमर्थस्सन् एतत् वक्ष्यमाणं साम गायन् आस्ते ॥

[24]हावु हावु हावु इत्यादि ॥ ईदृशीं विभूतिं प्राप्तवान् अहमस्मि विभूतिमदभेदेना[1]त्मानमुपलक्ष्य सामगाने स्तुवन् परमानन्दशरीरो गायन्नास्ते । एषा मुक्तस्य विभूतिवर्णना प्ररोचनार्था; न तु साम गायन्नासीतेति विधिः, स्वभावानुवादो वा ; आत्मतृप्तिकामस्यापि[2]मुक्तात्मनः क्रीडात्वेनोपपत्तेः । यद्वा—अपवर्गसुखे सर्वसुखान्तर्भावादेवमुक्तम् । अपवर्गसुखस्याशक्यवर्णनत्वात् मनुष्याधिकारसुखान्वयेन विभूतिवर्णना । तत्रादौ स्तोभाक्षराणि षडिति केचित् । अन्य अहुः—हो इति विस्मयार्थस्य निपातस्य विस्मयातिशयात् त्रिरुक्तिः गानविकारः[3] प्लुतत्रयं चित्रीकरणे च । तत्र प्रगृह्यस्यापि छान्दसं 'एचोऽप्रगृह्यस्य' इति प्लुतविकारः वकारोपजनश्च । एवमेनेन ज्योतिः तस्य [द्योतितस्य?] विस्मयातिशयभावनया तु क्वचित् प्लुतिः कृता । यथा—'ऋतास्य' 'अदन्तमाद्मि' इति । अथ अतिशयवृद्ध्या क्वचिन्नैरन्तर्येण द्वे प्लुते कृते—'नाभा' इति, 'एवमावाः' इति । एवं नव प्लुतानि । अन्ये गानविकारात् दीर्घाभासाः[4] । अहमन्नमित्यादि ।

---

[1]विभतिभेदेना. [2]अप्राप्तकामस्यापि. [3]गानविशेषाकारः. [4]दीर्घाभ्यासाः

**वेभ्यो अमृतस्य ना३ भायि । यो मा ददाति स इ देव-मा३वाः । अहमन्नमन्नमदन्तमा३ स्मि । अहं विश्वं भुवनमभ्यभवाम् । सुवर्न ज्योतीः । य एवं वेद । इत्युपनिषत् ॥ १४ ॥**

**भृगुस्त्रयोदशान्नं प्राणो मनो विज्ञानं द्वादश द्वा-दशानन्दो दशान्नं न निन्द्यादन्नं न परिचक्षीतान्नं बहु कुर्वीतैकादशैकादश न कंचनैकषष्टिर्दश ॥ १५ ॥**

---

अन्नहेतुत्वात् अन्नस्य तादात्म्येन आत्मा स्तूयते—सर्वमिदानीमह-मस्मीति तस्य अत्ता च अहमस्मीति भोग्यभोक्तृरूपं सर्वमह-मस्मीति । श्लोकाः वर्णसङ्घाताः । इह तूपचारेण सर्वे वटादयो गृह्यन्ते तेषां कर्ताऽहमस्मीति । यद्वा—सर्वस्य ग्रन्थसङ्घातस्य वेदशास्त्रादेरपि स्वेच्छयैव कर्ताऽस्मीति । ऋतस्य प्राप्तस्य जग-त्प्रपञ्चस्य वा प्रथमजाः प्रथमं जातोऽहमस्मीति सर्वविकारेभ्यः प्रागेव प्रादुर्भूतोऽस्मि । किं बहुना देवेभ्योऽपि पूर्वं प्रादुर्भू-तोऽस्मि अमृतस्य नाभिः नहनं प्राप्तिहेतुरस्मि । यो मां एवंभूतं ददाति स इत् स एवं आवाः आवृणोति अन्यै-रनावृतोऽहं दात्रैव वशीकृतोस्मि—

**तस्याहं नित्यमात्मस्थः स च नित्यं मयि स्थितः ।**

इति दर्शनात् । किञ्च—अहमन्नमद्मि अन्नमदन्तं च अ-द्मि मयि सर्वे निलीयन्ते भोग्यवर्गा भोक्तृवर्गाश्च । अत एव अहं विश्वं भुवनं अभ्यभवां विभुत्वेन अभिभवामि । छान्द-

**प्रजाप॑तिश्चरति॒ गर्भे॑ अ॒न्तः । [2]यस्मि॑न्नि॒दꣳ सं च॒ वि चैति॒ सर्वं॒ यस्मि॑न्दे॒वा अधि॒ विश्वे॑ निषे॒दुः । तदे॒व भू॒तं तदु॒ भव्य॑मा इ॒दं तद॒क्षरे॑ पर॒मे व्यो॑मन्न् । [3]येनावृ॑तं खं च॒ दिवं॑ म॒हीं च॒ येना॑दि॒त्यस्तप॑ति॒ तेज॑सा॒ भ्रा-**

अयं **प्रजापतिः** प्रजानां पाता परमात्मा विष्णुः **शुक्रेण** ज्योतींषि द्योतमानानि अग्निसोमपूषादीन् प्रजापरिणामहेतुभूतान् देवान् समनुप्रविष्टः तैरेकीभूतः **गर्भे अन्तः** शरीरमध्ये **चरति** जीवत्वेन वर्तते कर्मवैचित्र्यद्वारेण नानाक्षेत्रज्ञात्मना चरति ॥

[2]एवं समस्तचिदचित्प्रपञ्चात्मकत्वमस्योक्तम् । इदानीमेतदेव प्रपञ्चयति—यस्मिन्निति ॥ **यस्मिन्निदं** सर्वं विकारजातं यस्मिन् कारणे **समेति व्येति** च सृष्टिकाले अनेन सङ्गतं समुन्मिषति ऐतदात्म्येन स एव स्फुरति स हि तस्मिन् चरन् यत् प्रळयकाले व्येति व्ययं भजते आकिञ्चन्यं[1] भजमानो निमिषति । किञ्च—**यस्मिन् देवाः अधिनिषेदुः विश्वे**ऽपि देवाः देवनवन्तः विचित्रभावाः निषेदुः निषीदन्ति । अधिः ऐश्वर्ये वर्तते । एवं वर्तमानस्य तादात्म्यमुक्तम् । अथ **तदेव भूतं** उत्पन्नं **तदेव भव्यं** भविष्यत् **आः** आसीत् । अस्तेश्छान्दसे लङि इडभावः । **यस्मिन् इदं** सर्वं तत्र **अक्षरे** अविनाशे **परमे** व्योम्नि वर्तते तादात्म्येन तिष्ठति ॥

[3]येनेत्यादि ॥ येन कारणेन **खं च द्यौश्च मही च** त्रैलोक्यं **आवृतं** मृदा घटादिकमिव स्वात्मनाऽऽच्छादितम् । विभक्तिव्यत्ययः । **येन** आत्मवस्तुना कारणेन सूर्यस्तपाति यदनुग्रहेण येन वा **इद्धः** तपति **तेजसा** औष्ण्येन **भ्राजसा** दीप्त्या च ।

[1]अत्यं.

**जंसा च । यमन्तस्समुद्रे कवयो वयन्ति यदक्षरे परमे प्रजाः । [4]यतः प्रसूता जगतः प्रसूती तोयेन जीवान्व्यसंसर्ज भूम्याम् । यदोषधीभिः पुरुषान्पशूंश्च विवेश भूतानि चराचराणि । [5]अतः परं**

यद्वा—येन आवृतं त्रैलोक्यं सूर्यस्तपति येन अनुगृहीतः येन तेजोनिधिनाऽनुगृहीतः सूर्यस्तपति तेजसा भ्राजसा चोपलक्षितः । **समुद्रे** यस्मादिन्द्रियाणि बहिः प्रसरन्ति स समुद्रः शरीरं तस्मिन् **अन्तः** मध्ये **यं कवयो** मेधाविनो **वयन्ति** सन्तन्वन्ति ध्यानतन्तुना बध्नन्ति तस्मिन्नक्षरे परमे व्योम्नि सर्वाः प्रजाः स्थिताः[1] ॥

[4]**यतः** यस्मात् कारणात् **जगतः प्रसूती** त्रिगुणात्मिका प्रकृतिः **प्रसूता** उत्पन्ना । छान्दसं दीर्घत्वम् । किंच—यद्वस्तु **तोयेन** उपलक्षितत्वात् तोयादिभूतैः पञ्चभिः जीवान्[2] **व्यससर्ज** विसृजति उत्पादयति । अकारोपजनश्छान्दसः । लिटि वा अडागमः । **भूम्यां** तत्तद्भूमिकासु । यद्वा—एकमिदं वाक्यम् । यस्मात् प्रसूता जगतः प्रसूतिः तोयादिभिस्सह शुक्लेन वा सहकारिणा जीवानुत्पादयति । किञ्च—यद्वस्तु **भूतानि** विकारद्रव्याणि **चराचराणि** जङ्गमानि स्थावराणि च **पुरुषान् पशूंश्च** प्रदर्शनार्थत्वात् एवंप्रकारांश्चेतनान् **विवेश** सृष्ट्वा प्रविवेश **ओषधीभिः** सहितान् प्रदर्शनार्थत्वात् सर्वाण्यचेतनानि ॥

[5]अतः परमिति ॥ **अतः** आत्मनः **परं** प्रकृष्टं **अणीयसं** अणुतरम् । छान्दसोऽकारः । अन्यद्वस्तु नास्ति पराभेदात् । यद्वा—अतः अन्यत् पृथग्भूतं वस्तु नास्ति । अतोऽन्यत् अ-

[1]विकारस्थिताः. [2]भूतान्.

**नान्यदणीयसꣳ हि परात्परं यन्महतो महान्तम्। यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात् ॥१॥ तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्। इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः। तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु**

णुतरं नास्ति । किञ्च—इदं कारणं **परात्परं** सर्वपरं **महतो महान्तं** सर्वमहत् । लिङ्गविभक्तिव्यत्ययः । यद्वा—महान् अन्तः आभोगो यस्य तं महान्तं यदीदृशं अतः परमणीयो नास्ति । किञ्च—**यत् एकं** असहायमेव स्वकार्ये **अव्यक्तं** अनिश्चितस्वभावं **अनन्तरूपं** अनन्तभेदशक्तिकं **विश्वं** विश्वात्मकं **पुराणं** कारणानामाद्यं **तमसः** प्रधानस्य अज्ञानस्य वा **परस्तात्** अवस्थितम् ॥

[6]तदेवेति ॥ **तदेव** कारणवस्तु **ऋतं** मानसं **सत्यं** यज्ञं वा आहुः उ एव तदेव सत्यं वाचिकं यज्ञदेवतां वा आहुः **तदेव कवीनां** मेधाविनां यज्वनां **परमं** पूजितं **ब्रह्म** तपः अग्निर्वा । किञ्च—तदेव वस्तु **इष्टं** च **पूर्तं** च यज्ञसाध्यं फलं यज्ञद्वारेण **बहुधा** बहुप्रकारं **जातं जायमानं** उपलक्षणत्वाज्जनिष्यमाणं च **विश्वं बिभर्ति भुवनस्य** भूतजातस्य **नाभिः** नहनस्थानं उपादानम् ॥

[7]तदेवाग्निरिति ॥ अतः पराश्चतस्रोऽनुष्टुभः । तत्र प्रथमायां 'तद्ब्रह्म' इति त्र्यक्षराभिक्रान्तस्तृतीयः पादः । तदेव वस्तु **अग्निः** अग्निर्भूत्वा हविर्वहनादिना जगत उपकरोति । **तत्**

**चन्द्रमाः । तदेव शुक्रममृतं तद्ब्रह्म तदापस्स प्रजापतिः । [8]सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि । कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः । अर्धमासा मासा ऋतवस्संवथ्सरश्च कल्पताम् । [9]स आपः**

एव वायुभावेन विहरणप्रेरणादिना जगद्यन्त्रं प्रवर्तयति । **तत्** एव सूर्यात्मकं वृष्टिप्रकाशादिकारणम् । तदेव कार्यद्वारेण सम्प्रति जगद्धारयति । तदेव **चन्द्रमा** भूत्वा ओषधिवनस्पत्यादिवृद्ध्या प्राणिनो जीवयति । तदेव **शुक्रं** रेतोभावेन परिणतं सत् **अमृतं** अमृतत्वहेतुः प्रजाभावेन स जायते यथा—'प्रजामनु प्रजायसे । तदु ते मर्त्यामृतं'* इति । **तत्** एव **ब्रह्म** परिबृढमन्नं भूत्वा ताः प्रजा जीवयति । **तत्** एव **आपो** भूत्वा सस्यादिनिष्पत्तिद्वारेण प्राणिनः प्राणयति । तदेव प्रजापतिपदे स्थितं प्रजानां प्राकृतानां[1] पाता उत्पादयिता भवति ॥

[8]सर्व इति ॥ अस्मात्कारणात् विद्युतः विद्योतमानात् देदीप्यमानात् **पुरुषात्** पूरणशीलात् **सर्वे** निमेषादयः कालावयवाः **अधिजज्ञिरे** अधि जायन्ते । अष्टादशनिमेषाः काष्ठाः, तास्त्रिंशत् कलाः, तास्त्रिंशत् मुहूर्ताः, ते त्रिंशत् अहोरात्राः, ते पञ्चदश अर्धमासाः, तौ द्वौ मासः, तौ द्वावृतुः, ते षट् संवत्सरः परस्मादात्मनो जातः **कल्पतां** स्वकार्ये समर्थो भवत्विति वेदात्मा आशास्ते । लकारव्यत्ययः । संवत्सरश्च परस्मादात्मनो जातः कल्पत इति ॥

[9]किंच—स एव परमात्मा **आपः** आपो भूत्वा प्राणिनो

*आ. १-५-५.   [1]प्रकृतानां.

**प्रदुघे उभे इमे अन्तरिक्षमथो सुवः । [10]नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत् । न तस्येशे कश्चन त-**

जीवयति । किंच—उभे इमे इयं च असौ च द्यावापृथिव्यौ 'त्यदादीनां यद्यत्परं' इतीदमश्शेषः । कीदृश्यौ प्रदुघे प्रकर्षेण दोग्ध्र्यौ कामानां द्यावापृथिवीभावेन कामान् दुग्ध इत्यर्थः । स एव अन्तरिक्षभावेन अवकाशप्रदानादि कुर्वन् विश्वं बिभर्ति । किंच—स एव **सुवः** परमसुखस्थानादित्यमण्डलभावेन विश्वं पुनाति । यद्वा—परमसुखभावेन प्राणिनः प्रीणयति ॥

[10]नैनमिति ॥ **एनं** परमात्मानं ऊर्ध्वं ऊर्ध्वाधोभावेन परिच्छिन्नं न खलु कश्चित् **परिजग्रभत्** परिगृह्णाति परिच्छिन्नं नोपादत्ते । **तिर्यञ्चं** तिर्यग्विस्तारप्रमाणपरिच्छिन्नं एनं न कश्चित् परिगृह्णाति । **न मध्ये** विष्कम्भगत्या परिच्छिन्नमध्यावकाशं एनं न कश्चित् परिगृह्णाति । यद्वा—अयमस्य मध्यमः प्रदेश इति न कश्चित्तं परिगृह्णाति । लेटि शपः श्लुः । 'लेटोऽडाटौ' इत्यडागमः । 'हृग्रहोर्भः' इति भत्वम् । बुद्ध्या परिग्रहणं ज्ञानमेव । **तस्य** परमात्मनः अन्यः **कश्चन** कश्चिदपि **नेशे** नेष्टे पराभेदात् स एव सर्वस्येष्टे । हेतुमाह—**तस्य** कारणस्य यत् **नाम** नमनं कार्यप्रपञ्चं प्रति प्रह्वीभवनं, यथा—'सं बाहुभ्यां नमति संपतत्रैः'* इति । तत्खलु **महद्यशः** महायशोहेतुः तद्धेतुत्वात्ताच्छब्द्यम् । तत्खल्वन्येन कर्तुमशक्यम् । महाश्चर्यभूतस्य[1] महते यशसे भवति । तस्मात् नान्यः कश्चिदस्येष्टे ॥

*सं. ४-६-२.

[1]महायशस्य ऐश्वर्यभूतस्य.

स्यं नाम म॒हद्यशः॑ ॥ २ ॥ [11]न सं॒दृशे॑ तिष्ठति॒ रू॑-
पम॑स्य॒ न चक्षु॑षा पश्यति॒ कश्च॒ नैन॑म् । हृ॒दा म॑नी॒-
षा मन॑सा॒ऽभिक्लृ॑प्तो॒ य ए॒नं वि॒दुरमृ॑ता॒स्ते भ॑व-
न्ति । [12]अ॒द्भ्यस्सम्भू॑तो [13]हिरण्यग॒र्भ इ॒त्य॒ष्टौ । [14]ए॒ष

[11] न संदृशे इति त्रिष्टुप् ॥ अस्य रूपं स्वभावो न कस्य चिदपि संदृशे संदर्शनाय निरूपणाय तिष्ठति योग्यतां न प्रतिपद्यते । तथा कश्चिदपि एनं न चक्षुषा पश्यति अदर्शनार्थत्वात् सर्वेन्द्रियैर्न जानाति ज्ञातुं न शक्नोति । तर्हि प्रमाणैरवेद्यत्वात् असत्त्वमेवास्य प्राप्तमित्यत आह—हृदा हृदयाधिष्ठानेन अविक्षिप्तेन वश्येन मनीषा मनीषावतां मननशक्तिः मनीषा । तृतीयाया आकारः । मननकुशलेन योगिनां मनसा अभिक्लृप्तः अभिसंपादितः तेनैव वेद्यत इति यावत् । एनं एवंस्वभावं आत्मानं ये विदुः जानन्ति ते अमृताः अमरणधर्माणो भवन्ति परं प्राप्नुवन्ति 'ब्रह्मविदाप्नोति परं'* इति दर्शनात् ॥

[12]अद्भ्यस्सम्भूत इत्यनुवाको व्याख्यातो होतृप्रश्ने† ॥

[13]परमात्मवर्णनत्वेन 'हिरण्यगर्भः'‡ इत्यष्टावृचो व्याख्याताः अस्मिन्नेवार्थे 'ऊर्ध्वा अस्य'‡ इत्यत्र । एषां च आत्मतत्त्वप्रतिपादनमन्त्राणां अन्यत्र पठितानामिहातिदेशसामर्थ्यात् कल्पसूत्रविनियोगमन्तरेणापि अस्य लिङ्गादिना महापुरुषार्चनादौ विनियोगो द्रष्टव्यः ॥ ॥ इति परमात्मसूक्तम् ॥

*आ. ५-१४-२६. †आ. ३-१३. ‡सं. ४-१-८.

हि देवः प्रदिशोऽनु सर्वाः पूर्वो हि जातस्स उ गर्भे अन्तः । स विजायमानस्स जनिष्यमाणः प्रत्यङ्मुखांस्तिष्ठति विश्वतोमुखः । [15]विश्वतश्चक्षुरुत

[14]अथ देवार्य[1]गुणकीर्तनं द्वितीयं सूक्तमारभ्यते—एष हीत्याद्यास्त्रिष्टुभः ॥ एष हि देवः विश्वाधिकः सर्वाः प्रदिशः प्रधानदिशः परमात्मा दिक्प्रदेशान्[2] अनु लक्षीकृत्य सर्वासु दिक्ष्वनुगतो भवति सर्वत्र देवनशीलो भवति भानरूपत्वात् । न ह्यभातं किञ्चिदात्मानं लभते । तस्मात् सर्वत्रायमेव तत्तद्रूपेण भाति । किञ्च—स देवः पूर्वः प्रागेव विद्यमानः परमात्मा आदित्यरूपेण[3] प्रादुर्भूतः उ अपि तादृशो देवः इदानीं गर्भे अन्तः अविच्छिन्नचैतन्यः सङ्कुचितचैतन्यो भूत्वा नानाजीवभावेन वर्तते । किञ्च—स एव विजायमानः अचेतनात्मना विरूपेण जायमानः । यद्वा—कर्मवशेन विविधशरीरपरिग्रहेण गर्भान्निर्गच्छन् भवति । स एव जनिष्यमाणः पुत्रपौत्रादिभावेन सन्तायमानो भवति । किञ्च—एष आत्मा प्रत्यङ् प्रत्येकमञ्चन् मुखादुपक्रमात् आरभ्य कार्यजातं व्याप्य तिष्ठति । छान्दसं वर्णान्यत्वम् । यद्वा—मुखादारभ्य प्रपञ्चाभिमुख्येन तिष्ठतीति । वचनव्यत्ययो वा—प्रत्यङ्मुखः प्रपञ्चाभिमुखः[4] । आद्युदात्तत्वं मृग्यम् । कथमेकमुखस्यैवमवस्थानमित्याह—विश्वतोमुखः विश्वतो विद्यमानमुखभावः । तस्मात् बहुमुखत्वात् कृत्स्न[5]कार्यव्याप्तिः ॥

[15]विश्वतश्चक्षुरिति ॥ व्याख्याता 'य इमा विश्वा'* इत्यत्र । एको देवो रुद्र इत्युक्तम् ॥

[1] देवार्च्य [2]जीवप्रदेशान्. [3]विद्यमानः परमाण्वादिरूपेण.
[4]प्रपञ्चाभावाभिमुखः. [5]कृत्स्नेति नास्ति. *सं. ४-६-२.

विश्वतोमुखो विश्वतोहस्त उत विश्वतस्पात् । सं बाहुभ्यां नमति सं पतत्रैर्द्यावापृथिवी जनयन्देव एकः । [16]वेनस्तत्पश्यन्विश्वा भुवनानि विद्वान् यत्र विश्वं भवत्येकनीळम् । यस्मिन्निदꣳ सं च वि चैकꣳस ओतः प्रोतश्च विभुः प्रजासु । [17]प्र तद्वोचे अ-

[16]वेन इति ॥ वेनतिः कान्तिकर्मा । प्रपञ्चाविर्भावं कामयमानो देवः तत् परं व्योम परव्योमावस्थानं आत्मानं **पश्यन्** आविर्भावयन् यथा—'तदैक्षत बहु स्यां'* इति 'सोऽकामयत । बहु स्यां'† इति । **विश्वा** विश्वानि **भुवनानि** विश्वं भुवनात्मकं **विद्वान्** सर्वार्थज्ञः[1] विश्वभुवनयाथात्म्यज्ञः तदुपादानयोग्यं प्रथमं[2] बभूव । पुनश्च तद्विशिनष्टि—**यत्र** कारणद्रव्ये इदं **विश्वं** जगत् **एकनीळं** एकवासं सहावस्थितं **भवति** । उभयो[3]रेकत्वं स्मरन्ति । किञ्च—**यस्मिन्** कारणे इदं विश्वं **एकं** भूत्वा समेति व्येति च एकमिव द्रव्यं समुत्पद्यते विलीयते च तादृशं तत् परमकारणं पश्यन् स देवः **विभुः** व्यापकः **प्रजासु** विकारेषु सर्वेषु **ओतः प्रोतश्च** वर्तते । **ओतः** कारणत्वेन सर्वत्र कार्ये सन्ततः । **प्रोतः** अधिष्ठानत्वेन भोक्तृत्वपर्यायेण तस्मिन्नपि कारणे सन्ततः । यद्वा—कारणव्याप्तिः वानं, तद्व्याप्तव्याप्तिः प्रवाणम् ॥

[17]उक्तं परप्रकृत्युपादानं भुवनाद्यात्मकं रूपप्रपञ्चं देवो दृष्टवानिति । इदानीं तदुपादानं नामप्रपञ्चमपि स एव दृष्टवानि-

*छान्दो. ६-२. †आ. ५-१४-३१.

[1]सर्वात्मज्ञः [2]...योग्यं ततःसम्पश्यन्. [3]शुद्धयो.

शं नश्शीक्षाः सह नौ यश्छन्दसां भूस्स यः पृथिव्योमित्यृतं चाहं वेदमनूच्य शं नस्सह नाववतु ब्रह्मविद्गुः पञ्चदश ॥ १५ ॥

शं नो सह इत्यादित्यो नो इतराण्यसन्नेवान्नं न निन्द्यास्सतुश्चत्वारिंशत् ॥ ४४ ॥ हरिःओम् ॥

इति तैत्तिरीयारण्यके पञ्चमः प्रपाठकः.

॥ अथ षष्ठप्रपाठकः ॥

सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै । ओं शान्तिश्शान्तिश्शान्तिः ॥

॥ हरिः ओम् ॥

---

सो लुङ् । सुवश्शब्दवाच्यमादित्याख्यं ज्योतिर्न ज्योतिरिव विश्वमभिभवामि निजशक्तिमरीचिभिर्विश्वमभिभवामि व्याप्य तिष्ठामि । एवं ब्रुवन् ब्रह्मणैकत्वात् मुक्तात्मनां तत्तुल्यतां दर्शयति तत्तुल्यप्रभावत्वादेव । एवं एतत् साम गायन्नास्ते इत्युक्तम् । अथ य एवं वेदापि स सामगायन्नास्ते इति वेदितृमात्रस्य तत्तुल्यफलत्वमाह—य एवं वेदेति । इत्युपनिषत् ॥

इति भट्टभास्करविरचिते ज्ञानयज्ञाख्ये उपनिषद्भाष्ये पञ्चदशोनुवाकः.

तैत्तिरीयारण्यके पञ्चमप्रपाठकस्समाप्तः.

[1]अम्भस्यपारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान् । शुक्रेण ज्योतीꣳषि समनुप्रविष्टः

[1]अथ पुरुषसंस्कारार्थस्नानाचमनादिमन्त्रा अग्निहोत्रादिश्रौतोपकारकतया[1] अस्मिन् प्रपाठके आम्नाताः । एषां लिङ्गादिना विशेषविनियोगोऽन्वेष्यः । एषां सूक्तक्रमेण विधिरिति न्यायेन कल्प्यो विधिः । अयं समस्तः प्रश्नो याज्ञिक्य उपनिषद उच्यन्ते, यज्ञात्मना भगवता नारायणेन दृष्टत्वात् नारायणप्रतिपादकत्वात् । देवताश्च तत्सनाम्नचः । तत्र प्रथमानुवाके अध्यात्मविषया मन्त्राः तानेव विनियुज्यन्ते । तत्र वारुणीषूपनिषत्सु 'ब्रह्मविदाप्नोति परं' इति परप्राप्तिहेतुत्वेन तद्विभूत्यात्मकमानन्दं ब्रह्म वेद्यं प्रतिज्ञाय तत्स्वरूपं तदुपासनाविशेषास्सिद्धयश्च उक्ताः । इदानीं तस्यात्मनः परमविभूतिस्थानीयस्य कीदृशो विजृम्भण[2]प्रकार इत्याकाङ्क्षायां तमेवात्मानमधिकृत्योच्यते—अम्भस्यपार इत्यादि ॥ अयं स्वगुणैः प्रकृत्येकान्तैः कदाचिद्वर्ण्यते । परगुणेन कदाचित् तदभेदात् । त्रैष्टुभस्सर्वोऽनुवाकः । विशेषो वक्ष्यते । **अम्भसि** तोये **अपारे** पाररहिते अधस्तात् **भुवनस्य मध्ये** प्रपञ्चस्य मध्यावकाशे **नाकस्य** स्वर्गस्य **पृष्ठे** उपरि च एवं सर्वेषु विकारेषु[3] **समनुप्रविष्टः** समन्तादनुक्रमेण च प्रविश्य स्थितः कारणत्वात् मृदिव घटादिषु **महतो महीयान्** यन्नाम किञ्चिन्महत् ततोऽपि महीयान् महत्तरः । यद्वा—अम्भसि अपारे महाप्रळयावस्थायां भुवनस्य मध्ये प्रपञ्चावस्थायां नाकस्य पृष्ठे अपवर्गावस्थायां च सर्वदा सन्निहितः । किञ्च—

[1]पकारकाः. [2]विजृम्भमाण. [3]सर्वेष्ववकाशेषु.

मृतं नु विद्वान्गन्धर्वो नाम निहितं गुहासु ॥ ३ ॥ त्रीणि पदा निहिता गुहासु यस्तद्वेद स सवितुः पिताऽसत् । [18]स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा । यत्र देवा अमृतमानशाना-

त्याह—प्रतदिति ॥ शब्दस्य प्रथममाविष्करणं प्रवचनम् । नु पुराणे काले गां धारयतीति गन्धर्वः परनादात्मा[1] देवः तादृगवस्थो नाम भूत्वा तत् शब्दात्मकम् । तनोतेः क्विप् । तत्तत् प्रवोचे । अभ्यासस्य सम्प्रसारणाभावः छान्दसः । प्रथममाविष्कृतवान् । अमृतं अमृतत्वप्राप्तिहेतुं गुहासु शरीरावच्छिन्नात्मप्रदेशेषु निहितं वाचस्तुरीयं प्रोचे विद्वान् सर्वज्ञः । तथा अन्यानि च त्रीणि पदानि स देवः प्रोचे गुहासु संवृतेषु परमात्मप्रदेशेषु निहितानि यानि मनुष्या न वदन्ति । यथा—'गुहा त्रीणि निहिता नेङ्गयन्ति'* इति । तत् इदमर्थरूपं यः वेद सः सवितुः उत्पादयितुः पितुरपि पिता उत्पादयिता रक्षकः तारकः असत् स्यात् । वर्णव्यत्ययो वा—पितुः पिता । अस्तेर्लेटि 'लेटोऽडाटौ' इत्यडागमः ॥

[18]स न इति ॥ स एव देवः नः अस्माकं बन्धुः सुहृत् स एव जनिता जनयिता उत्पादयिता । 'मन्त्रे' इति णिलोपो निपात्यते । स एव विधाता श्रेयःकर्ता । स एव अस्माकं धामानि स्थानानि उचितानि वेद । स एव विश्वानि अपि भुवनानि भूतजातानि वेद । क इत्याह—यत्र देवे सुहृद्भूते देवाः देवत्वं प्राप्ताः अमृतं अमृतत्वं आनशानाः प्राप्नुवन्तः जीवाः तृतीये

[1]परमात्मा. *ब्रा. २-८-८.

स्तृतीये धामान्यभ्यैरयन्त । [19]परि द्यावापृथिवी यन्ति सद्यः परि लोकान्परि दिशः परि सुवः । ऋतस्य तन्तुं विततं विचृत्य तदपश्यत्तदभवत्प्रजासु । [20]परीत्य लोकान्परीत्य भूतानि परीत्य सर्वाः प्रदिशो दिशश्च । प्रजापतिः प्रथ-

द्युसंज्ञके लोके धामानि महिततमानि स्थानानि अभ्यैरयन्त आभिमुख्येनागमयन् आत्मन्यधि[1]कृतवन्तः स एव नो बन्धुरित्यादि ॥

[19]परीति ॥ सद्यः समानेऽह्नि द्यावापृथिव्यौ परियन्ति परिगच्छन्ति सर्वतो व्याप्नुवन्ति लोकान् ब्रह्मलोकादींश्च परियन्ति ऋतस्य यज्ञादेः कर्मणः विततं विस्तीर्णं तन्तुं भोगहेतुं फलं विचृत्य छित्वा प्रजासु मध्ये पूर्वोक्ताः अमृतमानशानाः प्रजाः एवं कर्मफलं छित्वा तत् परं वस्तु अपश्यत् पश्यन्ति ततः ते देवाः अभवत् भवन्ति तद्भावं प्राप्नुवन्ति । छान्दसोऽदादेशः । वचनव्यत्ययेन वा एकवचनम् ॥

[20]परीत्येति ॥ उक्तं मुक्तात्मनां देवेनैकात्म्यं फलम् । इदानीं देवस्य कार्यवर्गव्याप्तिं दर्शयति—अयं देवः प्रजापतिः प्रजानां विकाराणां पाता ऋतस्य यज्ञात्मनः परमात्मनः प्रथमजाः पूर्वमेव विद्यमानः लोकादीन् परीत्य परितो व्याप्य आत्मना आत्मीयेन रूपेण आत्मानं आत्मसमष्टिं परव्योमाख्यं वस्तु अभिसंबभूव अभितस्सम्प्राप्तवान् सर्वत्रानुप्रविश्याधिष्ठातृत्वेन तस्थौ । मिथुनीभावः सम्भवः, यथा 'तत्सृष्ट्वा । तदेवानुप्राविशत्'* इति ॥

[1]आत्माधीनी.

*आ. ५-१४-२१.

मजा ऋतस्यात्मनाऽऽत्मानमभि सं बभूव। [21]सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषम् । [22]उद्दीप्यस्व जातवेदोऽपघ्नन्निरृतिं मम ॥ ४ ॥ पशूꣳश्च मह्यमावह जीवनं च

[21]सदस इति गायत्री ॥ उक्तो दम्पत्योरिव मिथुनीभावो ब्रह्मणा परावरयोः । अधुना तमेवार्थं दर्शयन् स्पष्टयति— सीदन्त्यस्मिन् सर्वे विकाराः इति सदः प्रेयसीस्थानीया सर्वविकारहेतुः परा प्रकृतिः तस्याः पतिः पाता नित्यसंश्लिष्टो भर्ता तादृशं देवं अद्भुतं आश्चर्यगुणं प्रियं प्रीणयितारं इन्द्रस्य आत्मनः तस्याः प्रकृतेः काम्यं काम्यस्वभावं कामनार्हम् । अर्हे कृत्यप्रत्ययः । अत एव—सनिं सननीयं भजनीयं मेधां मेधाविनं अतिविदग्धं ईदृशं देवमहं अयासिषं अयानि प्राप्नवानि । छान्दसो लङ् । 'यमरमनमातां' इति सगिटौ । परप्रकृतिवशमापन्नं मामपि तामिवाङ्गीकरोतु ॥

[22]उद्दीप्यस्वेति ॥ द्वे अप्यनुष्टुभौ । हे जातवेदः ! जातानां वेदितः ! अग्निविशेषो जातवेदाः तदात्मानं देवं श्रियं प्रार्थयते 'श्रियमिच्छेद्धुताशनात्' इति दर्शनात् । हे जातवेदोरूप ! मदर्थमुद्दीप्यस्व मदीयां निरृतिं पापदेवतामलक्ष्मीं अपघ्नन् अपनीयं नाशयन् । हेतौ शता । तदर्थमुद्दीप्यस्व । ततो मह्यं अपहतनिरृतिकाय पशून् गवादीन् आवह च आनय च-जीवनं च जीवनार्थं च सर्वा अपि दिशो दिश प्रयच्छ । अपहतपाप्मतया अमृतत्वप्राप्तिहेतु[1]र्लक्ष्यते, 'सर्वान् कामान् सह ।

[1]अमृतत्वप्राप्ति.

दिशो दिश। [23]मा नो हिꣳसीज्जातवेदो गामश्वं पुरुषं जगत्। अबिभ्रदग्न आगहि श्रिया मा परि पातय। [24]पुरुषस्य विद्म सहस्राक्षस्य महादेवस्य धी-

ब्रह्मणा'* 'इति दर्शनात्। अत्र 'चवायोगे प्रथमा' इति हेत्यस्य निघाताभावो युक्तः॥

[23]मा न इति॥ हे जातवेदोरूप! सा निरृतिः मम गवादीन् मा हिंसीत् त्वत्प्रसादेन मा वधिष्ट। पुरुषव्यत्ययो वा—हे देव त्वं अस्माकं गवादीन् मा हिंसीः। अबिभ्रत् हिंसाधीकारात् तत्साधनान्यायुधानि अस्मदभयाय अधारयन् तानि च क्वचिन्निधाय आगहि आगच्छ; यथा 'परमे वृक्ष आयुधं निधाय कृत्तिं वसान आचर पिनाकं बिभ्रदागहि'† इति। गमेर्लोटि 'शपो लुक्'। अग्ने! अङ्गनादिगुण!। यद्वा—अग्नचात्मन्!। आगत्य मा मां श्रिया गवादिलक्षणया मोक्षात्मिकया वा परिपातय सर्वतस्सङ्गमय॥

[24]पुरुषस्येति॥ पुरउण्णिक्। कर्मणस्सम्प्रदानत्वात् सर्वा चतुर्थ्यर्थे षष्ठी। पुरुषं विश्वस्य पूरयितारं विश्वातीतं ध्यानाद्यविषयं परं वस्तु विद्म जानीम लभेमहि वा। विन्दतेर्विकरणव्यत्ययेन लुक्। सहस्राक्षस्य अनन्तज्ञानस्य अनन्तशक्तिकस्य वा पुरुषस्य विद्म महादेवस्य ध्यानादियोग्यविग्रहपरिग्रहक्रीडावन्तो देवाः तेषां प्रशस्तो महादेवः क्रियाशक्तिमधिष्ठाय यो देव्या सह जगदनुगृह्णाति तं धीमहि ध्यायेम। सम्प्रसारणा-

*आ. ५-१४-२६. †सं. ४-५-१०.

महि । तन्नो॑ रुद्रः प्रचो॒दया॑त् । [25]तत्पुरु॑षाय वि॒द्महे॑ महादे॒वाय॑ धीमहि । तन्नो॑ रुद्रः प्रचो॒दया॑त् । [26]तत्पु॑रु॑षाय वि॒द्महे॑ वक्रतुण्डाय॑ धीमहि । तन्नो॑ दन्तिः प्रचो॒दया॑त् । [27]तत्पुरु॑षाय वि॒द्महे॑ सुवर्णप॒क्षाय॑ धीमहि ॥ ५ ॥ तन्नो॑ गरुडः प्रचो॒दया॑त् । [28]का॒त्याय॒-

---

त्मनेपदे छान्दसे । अथ तत् तत्र नः अस्मान् रुद्रः ज्ञानशक्तेरधिष्ठाता यो विश्वं प्रेरयति सः प्रचोदयात् प्रचोदयतु-वर्तयतु लेटचाडागमः ॥

[25]तत्पुरुषायेत्याद्याः पञ्च गायत्र्यः । तत्र प्रथमा गता । 'तन्नो रुद्रः प्रचोदयात्' इत्येतदन्तं सूक्तम् । ईश्वरार्चनेऽस्य विनियोगः । तदिति चतुर्थ्या लुक् । तस्मै प्रसिद्धैश्वर्याय । नतापतयानेत्येके(?) । क्विप् । अनुनासिकलोपे तुगागमः ॥

[26]अथ प्रसङ्गात् विघ्नेश्वराद्याराधनार्था गायत्र्यः आम्नाताः । द्वितीया विघ्नेशगायत्री । पराभेदात् पुरुषशब्देन सर्वदेवताभिधानम् । सर्वत्रावस्थात्रैविध्यं यथाकथंचिदुत्प्रेक्ष्यम् । वक्रतुण्डः कुटिलनासिकः । छान्दसष्टकारः । [छान्दसो हकारः ?] । दन्तिः महादन्तः । छान्दसो ह्रस्वः ॥

[27]तृतीया गरुडगायत्री—सुवर्णपक्षः शोभनपतनसाधनपक्षः गरुडः निगरणशीलः सर्पाणाम् । गिरतेरौणादिकः उडन् ॥

[28]चतुर्थी दुर्गागायत्री ॥ तदभिमान्यग्निविशेषो मन्त्रप्रतिपाद्यः । कतस्यापत्यं कात्यायनः । यञन्तात् 'यञिञोश्च' इति फक् ।

नाय विद्महे कन्यकुमारि धीमहि । तन्नो दुर्गिः प्रचोदयात् । [29]नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् । [30]सहस्रपरमा देवी शतमूला शताङ्कुरा । सर्वꣳ हरतु मे पापं दूर्वा दुस्स्वप्ननाशनी । [31]अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरा ।

---

**कन्यकुमारि** । कन दीप्तौ । दीपनशीला कुमारी कन्याकुमारी तादृग्रूपं **धीमहि** । छान्दसं ह्रस्वत्वं, विभक्तिलोपश्च, दुर्ग इत्यग्नेर्नाम तदात्मिका देवी दुर्गा ॥

[29]पञ्चमी विष्णुगायत्री—नृ नये, पचाद्यच् ॥ नरः नेता विश्वस्य । तस्य अपत्यानि नाराः सर्वे चेतनाः अचेतनाश्च तेषां अयनं उपादानस्थानं **नारायणः** परमात्मा स एव भोक्तृवर्गस्थो वासुदेवः जगतां वासहेतवो वागिन्द्रियाणि तैर्ये व्यवहरन्ति ते वासुदेवाः । तेषां समष्टिः **वासुदेवः** **विष्णुः** व्यापनशीलः विक्रमादिकर्ता । गतमन्यत् ॥

[30]स्नानकाले शिरसि मङ्गलार्थं दूर्वां धारयेत्—सहस्रपरमेत्यनुष्टुभा ॥ **सहस्रपरमा** सहस्रादभ्यधिका फलप्रदाने परिणामे वा **देवी** दीप्तिमती **शतमूला** अनेकमूला **शताङ्कुरा** तादृशी **दूर्वा** **दुस्स्वप्ननाशनी** दुस्स्वप्नफलनाशनी मम **सर्वं** **पापं** **हरतु** । अत्र 'काण्डात्'* इति द्वितीयां केचिदधीयते । 'या शतेन'* इति तृतीयां च । ते द्वे अग्निकाण्डे गते* । 'त्वया हतेन' इति तस्या उत्तरमर्धर्चं पठन्ति ॥

[31]स्नानकाले मृद्ग्रहणमन्त्राः—अश्वक्रान्त इत्याद्याः । प्रथमा

---

*सं. ४-२-९.

शिरसा धारिता देवि रक्षस्व मां पदेपदे । [32]उद्धृताऽसि वराहेण कृष्णेन शतबाहुना ॥ ६ ॥ भूमिर्धेनुर्धरणी लोकधारिणी । [33]मृत्तिके हनं मे पापं यन्मया दुष्कृतं कृतम् । त्वया हतेन पापेन जीवामि शरदश्शा-

अनुष्टुप् । उद्धृताऽसीति द्वितीया परोष्णिक् । मृत्तिके हनेति तृतीया अनुष्टुप् । मृत्तिके देहीति चतुर्थ्यनुष्टुबेव । तस्याः पूर्वमर्धर्चं केचिदधीयते त्वया हतेनेति । द्वितीयमर्धर्चमनुषङ्गेणेच्छन्ति । अन्ये तु अन्यमर्धर्चमधीयते—

यद्दैवं यच्च मानुषं ब्रह्मदत्ताऽसि काश्यपि इति ।

गन्धद्वारामित्यनुष्टुप् ।

हे मृत्तिके! अश्वक्रान्ते! अश्वेन व्यापकेन परमात्मना क्रान्ते! व्याप्ते! रथक्रान्ते! रथेन रंहणशीलेन जीवसमष्ट्या पुरुषेण क्रान्ते! अधिष्ठिते! हे विष्णुक्रान्ते! विष्णुना विक्रममाणेन क्रान्ते! 'विचक्रमे पृथिवीमेष एतां'* इति दर्शनात् । सा त्वं वसुन्धरा वसूनां धनानां धारयित्री अद्य मया शिरसा धारिता देवनात् देवी देवनशीला मां पदेपदे रक्षस्व स्थानेस्थाने रक्ष ॥

[32]त्वं हि उद्धृता आसि पूर्वं वराहेण वराहवपुषा कृष्णेन कर्षणकुशलेन शतबाहुना अनन्तबाहुकार्येण उद्धृताऽसि अत एव त्वं भूमिः सर्वविकाराणां भवनाधिकरणं धेनुः धेनुवत् सर्वस्य प्रीणायित्री धरणी ध्रियन्ते जीव्यन्ते अस्यामिति धरणी । धृङ् अवस्थाने, अधिकरणे ल्युट् । लोकधारिणी लोकस्य धारयित्री ॥

[33]हे मृत्तिके! मम पापं हन नाशय । व्यत्ययेन शप् ।

*ब्रा. २-४-३.

तम् । [34]मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितम् । [35]गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् । [36]हिरण्यशृङ्गं वरुणं प्रपद्ये तीर्थं मे देहि याचितः । यन्मया भु-

यत् मया दुष्कृतं दुष्कर्म विहिताकरणं अन्यथाकरणं वा कृतं त्वया हेतुना हतेन नाशितेन पापेन इत्थंभूतोऽहं शरदश्शतं जीवामि जीव्यासम् । पञ्चमो लकारः ॥

[34]हे मृत्तिके! मे पुष्टिं देहि त्वयि सर्वं पुष्टिकारणं प्रतिष्ठितं यत् दैवं देवसम्बन्धि यच्च मानुषं मनुष्यसम्बन्धि तत्सर्वं च त्वयि स्थितम् । ब्रह्मणा परेण लोकहितार्थं दत्ताऽसि हे काश्यपि! काश्यपेन प्रजापतिना दृष्टा ॥

[35]गन्धद्वारामिति ॥ गोमयालेपने कैश्चिद्विनियुक्ता । श्रियो हेतुत्वात् तद्भावेन स्तूयते । गन्धद्वारां गन्धः प्रकाशः । इह तु तद्धेतुत्वात् धर्म उच्यते । स द्वारमुपायो यस्यास्तां सुरभिगन्धद्वार[1]शोभनां वा दुराधर्षां अमार्गेण प्राप्तुमशक्यां नित्यपुष्टां ध्रुवपुष्टिहेतुं करीषिणीं गोमयवतीं वा मृद्वतीं वा तद्रूपत्वात् सर्वभूतानां देवानामपि ईश्वरीं स्वामिनीं तादृशीं श्रियं अस्मिन् कर्मणि उपह्वये मम समीपे आह्वयामि ॥

[36]स्नानकाले जपति—हिरण्यशृङ्गमिति द्वे ॥ प्रथमा पुरस्ताद्बृहती । हिरण्यशृङ्गं हितरमणीयदीप्तिं हिरण्यवदुज्ज्वलदीप्तिं वा वरुणं प्रपद्ये स त्वं मे मह्यं तीर्थं तारकं पुण्यं देहि याचितः

[1]द्वारा.

कम॒साधूनां॑ पा॒पेभ्य॑श्च प्र॒तिग्र॑हः । [37]यन्मे॒ मन॑सा वा॒चा क॒र्मणा॑ वा दु॒ष्कृतं॑ कृ॒तम् । तन्न॒ इन्द्रो॒ वरु॑णो॒ बृह॒स्पति॑स्सवि॒ता च॑ पुनन्तु॒ पुनः॑पुनः ॥ ७ ॥ [38]सु॒मि॒त्रा न॒ आप॒ ओष॑धयस्सन्तु [39]दु॒र्मि॒त्रास्तस्मै॑ भूयासु॒र्यो॑ऽस्मान्द्वेष्टि॒ यं च॑ व॒यं द्वि॒ष्मः । [40]नमो॒ऽग्नये॑ऽप्सु॒मते॒ नम॒ इन्द्रा॑य॒ नमो॒ वरु॑णाय॒ नमो॒ वा-

---

प्रार्थितः । कुतस्तारकमित्याह—यन्मया भुक्तं प्रतिगृहीतं असाधूनां कर्मणा अभोज्यान्नानां सम्बन्धि यदन्नं भुक्तं यश्च पापेभ्यः म्लेच्छादिभ्यः स्वतः अभोज्यान्नेभ्यः प्रतिग्रहः ततस्सर्वस्मात्तारकमिति ॥

[37]यन्म इति पथ्याबृहती ॥ यत् मे मदीयैः मनआदिभिः दुष्कृतं कृतं तत् मे मत्तः । पञ्चम्यर्थे षष्ठी । इन्द्रादयः पुनःपुनः निरवशेषं पुनन्तु शोधयन्तु अपनयन्तु ॥

[38—39]अञ्जलिना उपहरति—सुमित्रा न इति ॥ अतः पराणि यजूंषि । तां दिशं निरुक्षयति यस्यां दिशि द्वेष्यो भवति—दुर्मित्रा इति । उभे व्याख्याते* ॥

[40]दर्शपूर्णमासयोः अप्पतीनुपतिष्ठते[1]—नम इति ॥ अग्निस्तद्वान् अप्सुमान् । वरुणस्य पत्नी वारुणी । गतमन्यत् ॥

---

1. ∙ ∙ ∶ ∙ मासयोर्नैवोपतिष्ठते.　　　　*सं. १-४-४५.

रुण्यै नमोऽद्भ्यः । [41]यदपां क्रूरं यदमेध्यं यदशान्तं तदपगच्छतात् । [42]अत्याशनादतीपानाद्यच्च उग्रात्प्रतिग्रहात् । तन्मे वरुणो राजा पाणिना ह्यवमर्शतु । [43]सोऽहमपापो विरजो निर्मुक्तो मुक्तकिल्बिषः। नाकस्य पृष्ठमारुह्य गच्छेद्ब्रह्मसलोकताम् ।

---

[41]हस्तेन [1]प्रदक्षिणमुदकमावर्तयति यस्मिन् प्रदेशे निमज्जति— यदपामिति यजुषैव ॥ अपां सम्बन्धि यत् क्रूरं हिंसकं यत् च अमेध्यं अमेधार्हं अशुद्धं यच्च अशान्तं सोपद्रवं मन्त्रादिनिरुद्धवीर्यं तत् सर्वं आभ्यः अपगच्छतात् अपगच्छतु नश्यतु ॥

[42]उत्तरास्तिस्रो निमज्जनमन्त्राः—अत्याशनादित्याद्याः ॥ प्रथमे अनुष्टुभौ । शास्त्रमर्यादामतीत्य यदशनं यच्च पानं देवयज्ञतर्पणादिकार्यमतीत्य अत्यशनं अतिपानं च यत् पापं यच्च पापं उग्रात् प्रतिग्रहात् शास्त्रमर्यादाहिंसकात् प्रतिग्रहात् तत् सर्वं पापं मदीयं वरुणो राजा अपां स्वामी पाणिना अवमर्शतु अपनयतु । हिशब्दस्सम्भावनायाम् । एवं मां सम्भावयतु पाणिनाऽपि ह्यवमर्शतु पापं यथा न करोमीति ॥

[43]सोऽहं त्वया अपमृष्टपापः पापैरनभिभवनीयः विरजः विरजाः आणवादिसमस्तमलरहितः। छान्दसो लिङ्गव्यत्ययः । निर्मुक्तः विमुक्तसंसारबन्धः । मुक्तकिल्बिषः विगलितसर्वपाशः । ततः नाकस्य सर्वदा विद्यमानसुखस्य । स्थानं पृष्ठं उच्छ्रितप्रदेशं[2]

---

[1]अप्सुस्थाने.

[2]पतितप्रदेशं परिलीनं प्रदेशं.

[44]इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमँ सचतापरुष्णिया। असिक्निया मरुद्वृधे वितस्तयाऽऽर्जीकीये शृणुह्या सुषोमया। [45]ऋतं च सत्यं चाभी-

परमाकाशं आरुह्य ततो गच्छेयम् । पुरुषव्यत्ययः । ब्रह्मणा परेण विश्वातीतेन समानलोकतां समानावकाशतां गच्छेयं गन्तुमर्होऽस्मि सञ्जातः ॥

[44]इमं म इति जगती ॥ नदीनामान्येतानि । 'स्वरितात्संहितायां' इत्यैकश्रुत्यम्। हे गङ्गे! इमं मदीयं स्तोमं स्तोत्रं शृणुहि शृणु। 'उतश्च प्रत्ययाच्छन्दो वा वचनम्' इति लोपाभावः। अस्मत्पार्श्वमागत्य शृणुहि । एवं यमुनादिषु द्रष्टव्यत् । ततः सर्वा यूयं आसचत आगत्य मयि समवेता भवत शरीरमनुप्रविश्य तिष्ठत । तत्र गमनशीला[1] गङ्गा । यमयित्री यमुना पापानामुपरतिकारिणी। विचित्रसरणा सरस्वती क्वचित्क्वचिदनुपलम्भात् । आशुप्रवृद्धद्रवणा शुतुद्री। परागतोष्णा अपरुष्णी । गौरादिर्द्रष्टव्यः। आकारेण सह यणादेशे इकारोपजनश्छान्दसः । असितवर्णा असिक्नी । 'छन्दसि क्नमेक इच्छान्ति' इति ङीपि क्नादेशः। 'उणादयः' इति विभक्तेरुदात्तत्वम् । पूर्ववत् इकारोपजनः। हे मरुद्वृधे! मरुद्भिर्वर्धिते। इगुपधलक्षणः कः। वितस्तया उपक्षयरहिता वितस्ता आर्जीकीये! आर्जीकेषु देशेषु भवे! सुषोमया सह शोभना सोमलता यस्यास्तीरे सा । सुषामादिर्द्रष्टव्यः ॥

[45—47]अन्तर्जलगतोऽघमर्षणेन त्रीन् प्राणायामान् धारयेत्—ऋतं चेत्यादि ॥ इत उत्तराः पञ्च अनुष्टुभः । ब्रह्मणो याथात्म्य-

[1]आगमनशीला.

**द्धात्तपसोऽध्यंजायत ॥ ८ ॥ ततो रात्रिंरजायत ततंस्समुद्रो अंर्णवः । [46]समुद्रादंर्णवादधिं संवथ्सरो**

---

वित् ऋषिः कश्चिदघमर्षणः । तत्प्रतिपादकं सूक्तमपीदमघमर्षणं तृचं अघानामतिशयेनाभिभवितृ । स्नानेऽपि नित्येऽस्य विनियोगः । 'सममश्वमेधावभृथेन'* इत्यादिदर्शनात् प्रायश्चित्ततया विनियुज्यते । **ऋतं** समस्ताचिदचित्प्रपञ्चोपादानं परा प्रकृतिः चेतनसमष्टिः **सत्यं** विज्ञानात्मा क्षेत्रज्ञः प्रवृत्तिज्ञानाश्रयः सति साधु **सत्यं** तदुभयमपि परस्मात् ब्रह्मणः प्रकरणाल्लभ्यते । **ततोऽध्यजायत** रूपाधिक्येन ततः प्रादुरभूत् । कीदृशात् **अभीद्धात्** इच्छाशक्तिसमालिङ्ग उक्तः । अथ भोग्यवर्गसृष्टिमाह— **ततः** विज्ञानात्मसृष्टेः परिणामक्रमेण **रात्रिः** अचित्प्रकृतिः प्रधानं नाम **अजायत** रात्रिवद्रात्रिः तमोरूपत्वात् ब्रह्मगुणानां प्रकाशादीनां तिरोधानहेतुत्वात् । रमन्तेऽस्मिन् सर्वे भावा इति रात्रिः । अहोरात्रपरिच्छेदकारिणोस्सूर्याचन्द्रमसोस्सृष्टेर्वक्ष्यमाणत्वात् न मुख्या रात्रिर्गृह्यते । **ततः** रात्रेः **समुद्रः** अजायत समुद्भवन्त्यस्मात्[1] सर्वे भावा इति समुद्रः महान् यत्रोन्मिषति भोग्यवर्गः तदेवार्णवः अर्णवन् चेत्यावस्थानं(?)[2] अर्णवः 'अर्णसो लोपश्च' इति व-प्रत्ययः । अत्रापि भूतानां अस्पष्टत्वात् अपां निधानस्य ग्रहणम्[3] । यद्वा—गतसृष्टिरेवानेन प्रकारेणोच्यते । ततः **समुद्रात् संवत्सरोऽजायत** संवसन्त्यस्मिन् सर्वाः प्रजा इति संवत्सरः समस्तप्रजाधारभूतो विराट् प्रजापतिः योऽण्डात् प्रादुरभवत् 'संवत्सरः प्रजापतिः'† इति च श्रुतिः । कीदृश इत्या-

---

[1]द्रावन्त्यस्मिन्. [2]अर्णवन्नेत्यवस्थानं अर्णवन् चेत्यवस्थानं. [3]निधानस्याग्रहणं.

*गौतमध. २४-१०. †ब्रा. १-४-१०.

**अजायत । अहोरात्राणि विदधद्विश्वस्य मिषतो वशी । [47]सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।**

ह—**अहोरात्राणि** अहोरात्रजीविनः प्राणिनः सर्वान् **विदधत्** विविधं स्थापयन् कर्मानुरूपेण नानायोनिप्राप्त्या सुखदुःखयोर्नियमयन् । यद्वा—कालसृष्टिरेषा संवत्सरावयवः कालः संवत्सरः यः अहोरात्राणि विदधाति यश्च **विश्वस्य मिषतः** चेतनाचेतनवर्गस्य वशी नियन्ता । ननु दिनकररजनीकरयोरसृष्टयोः कथमहोरात्राणां तज्जीविनां च प्राणिनामयं विधाता स्यात् । तत्राह—**सूर्याचन्द्रमसौ धाता यथापूर्वं अकल्पयत्** आनुपूर्व्येण स्थितयोस्तत्परिच्छेद्याहोरात्राद्यवस्थानोपपत्तिः अण्ड इव सृष्टचनन्तरं सूर्याचन्द्रमसौ धाता विश्वस्य धारयिता देवः अकल्पयत् । ततः ताभ्यामहोरात्राणि विविधं स्थापयामास अनेनाभिप्रायेण अहोरात्राणि विदधत् संवत्सरोऽजायत इत्यवोचामेति यथापूर्वग्रहणेन दर्शितम् । यद्वा—यथोचितकार्यकारणक्रमेण पूर्वसृष्टसदृशं वा सर्वमकल्पयत् यथा—सूर्याचन्द्रमसौ पूर्वसृष्टिभवाविहाहोरात्रयोः परिच्छेत्तारौ अकल्पयत् वयोविद्याऽऽचारादीनां विहरणार्थं **सुवः** नाकस्य पृष्ठं परमसुखस्थानं अकल्पयत् । यद्वा—द्युप्रभृतिनिवासिनः सर्वान् यथायथं स्वेस्वे अधिकारे अकल्पयत् । सामर्थ्यात् सा परा देवता अस्मान् पुनात्वित्यवगम्यते ॥

[48]अघमर्षणोत्तरकालं उत्तराभिस्तिसृभिः स्नायात्—यत्पृथिव्यामिति ॥ **रजः** मलं **पृथिव्यां** पृथिवीवासिनां **स्वं** आत्मीयं मलं पृथिव्यां तद्धेतोः कर्मणः कृतत्वात् स्वमित्युच्यते । अथ **आन्तरिक्षे** अन्तरिक्षनिवासिनः आगतं त्यक्तदेहात् अपरिगृहीत-

दिवं॑ च पृथि॒वीं चा॒न्तरि॑क्षम॒थो सुव॑ः । [48]यत्पृ॑थि॒व्याꣳ रज॑स्स्व॒मान्तरि॑क्षे वि॒रोद॑सी । इ॒माꣳस्तदा॒पो वरु॑णः पु॒नात्व॑घमर्ष॒णः । [49]ए॒ष भू॒तस्य॑ भ॒व्ये भुव॑नस्य गो॒प्ता । ए॒ष पु॒ण्यकृ॑तां लो॒का॒नेष मृ॒त्योर्हि॑र॒ण्मय॑म् । [50]द्यावा॑पृथि॒व्योर्हि॑र॒ण्मय॒ꣳ सङ्-

---

देहान्तरात्[1] अनुबद्धात् । अथ रोदसी रोदस्योः । 'सुपां सुलुक्' इति सप्तम्याः लुक् । द्यावापृथिव्योः विगतफलद्वारेण दिवि पृथिव्यां च विविधमेव स्थितं यथाकर्मयोगं तत् तस्मात् इमान् अस्मान्[2] आपः वरुणश्च तासां राजा पुनातु शोधयतु अघमर्षणः पापानामभिभविता अप्त्वेन वरुणत्वेन च वर्तमानो देवः पुनात्विति प्रकरणाद्गम्यते । अत्र आपो वरुण इति स्वरान्यत्वं छान्दसम् । केचिदैकपद्यादैकस्वर्यमिच्छन्ति—आपोवरुणरूपी आपोवरुण इति । तदानीं पूर्वपदस्य असुगागमः अन्तोदात्तत्वं छान्दसम् । आप्तिमान्वरुणः ॥

[49]एष इत्यादि ॥ एषः देवः भूतस्य जातस्य भव्ये भव्यस्य जनिष्यमाणस्य उपलक्षणत्वात् जायमानस्य च भुवनस्य भुवनजातस्य गोप्ता रक्षिता हेतौ शाता । रक्षार्थं स्थितः । किञ्च—एषः देवः पुण्यकृतां आर्जितसुकृतानां प्रजानां लोकान् सुवः संश्रितः सुखं भूत्वा संश्रितः । आदित्यो वा भूत्वा मृत्योरपि सुवर्णतयाऽवस्थितः । हिरण्मयं हितरमणीयं हिरण्मयरूपं वा ॥

[50]द्यावापृथिव्योर्हिरण्मयमिति ॥ एष देवः द्यावापृथिव्यावपि लोकौ

---

[1]अत्यक्तदेहात्. परिगृहीतदेहान्तरात्. [2]......फलद्वारेण पृथिव्यां संभवति तत्तस्माद्रजसस्सर्वस्मात् । पूर्ववत्पञ्चम्या लुक् । इमानस्मान्.

श्रितꣳ सुवः ॥ ९ ॥ स नस्सुवस्सꣳशिशाधि ।
[51]आर्द्रं ज्वलति ज्योतिरहमस्मि । ज्योतिर्ज्वलति

संश्रितः हितरमणीयसुखरूपः हे देव! स त्वं सुवः तादृशसुखरूपो भूत्वाऽस्मान् संशिशाधि संशितव्रतान् अस्मानपापान् कुरु आदित्यरूपो वा । श्यतेः लेटि छान्दसः 'अङितश्च' इति धिभावः । एषा च पञ्चपदसमा । चतुरक्षरास्सर्वे पादाः । प्रथमः पञ्चाक्षरः । तेनेयं शङ्कुमती । यथाऽऽहुः—' एकस्मिन्पञ्चके सर्वं छन्दश्शङ्कुमती ' इति । तृतियोऽपि पादश्चतुरक्षर एव । एवं स्वरिति ह्येकाक्षरं अध्ययनधर्मेण द्व्यक्षरं ज्ञायते । न तद्ध्येतत् छन्दसां योनेर्जन्मना अधिकाक्षरत्वेनाद्रियते ' यामिनामर्यमा '[1](?) इति वचनात् । यथा स नस्सुवरिति वचनात् ॥

[51]अपः आचामति—आर्द्रमिति यजुषा ॥ आर्द्रं सरसं विजृम्भणोन्मुखं भूत्वा ज्वलति वर्धते ज्योतिः आत्मज्योतिः प्रसवोन्मुखात्मज्योतिर्भावेन सृष्टिकाले परं वस्तु ज्वलति पञ्च[प्रपञ्च]रूपेण वर्धते इत्यर्थः । यत् ज्वलति तदेव अहमस्मि न ततोऽन्योऽस्मि अथ ज्योतिर्भूत्वा ज्वलति परं ब्रह्म दाहकाग्निरूपेण प्रतिसर्गकाले परं ब्रह्म ज्वलति उपसंहाररूपेण वर्धते यत् तथा ज्वलति तदेव अहमस्मि न ततोऽन्योऽस्मि तस्मादुक्तेन प्रकारेण योऽहमस्मि यादृक्स्वरूपोऽहमस्मि तथा ब्रह्माहमस्मि सर्वतः परिबृढं वस्त्वास्मि न मत्तोऽन्यदस्ति अतः इदानीमहमेवाहमस्मि एतावन्तमनेहसमन्तरोऽन्योऽहमभूवं[2] इदानीं नान्यं पश्यामि । सोऽहमिदानीं मां जुहोमि मय्येव मां प्रक्षिपामि अभेदध्यानव्याजेन

[1]' यामिनायः '.  [2]एतावति ह्यन्तरे अन्योऽहमित्यभूवं.

ब्रह्माहम॑स्मि । योऽहम॑स्मि ब्रह्माहम॑स्मि । अह॒मेवाहं मां जु॑होमि स्वाहा॑ । [52]अ॒कार्य॒कार्य॑व॒कीर्णी स्ते॒नो भ्रू॑ण॒हा गु॑रुत॒ल्पगः । वरु॑णो॒ऽपाम॑घमर्ष॒णस्तस्मा॑त्पा॒पात्प्रमु॑च्यते । [53]र॒जोभू॒मिस्त्व॒मा२ रोद॑-

परं ज्योतिर्हुताशने विज्ञानात्मलक्षणं हविः **स्वाहा** स्वाहुतामाहुतिमिव प्रक्षिप्य स्वरूपाभिनिष्पत्त्याऽऽविर्भावफलं होमं निर्वर्तयामीति स्वाहाकारेण सूचयति ॥

[52]पुनः स्नाति—अकार्यकारीति पुरस्ताद्बृहत्या ॥ स्तेनान्तः प्रथमः पादः । **अकार्यकारी** प्रतिषिद्धसेवनशीलः **अवकीर्णी** भग्नव्रतः ब्रह्मचर्यादिहीनः **स्तेनः** ब्राह्मणस्वर्णापहारादिकृत् । **भ्रूणहा** वेदवेदाङ्गविदो हन्ता । **गुरुतल्पगः** गुरुभार्यागामी । सर्वेऽप्येते तस्मात् आत्मीयात् पापात् **प्रमुच्यते** अनेन मन्त्रेण दहनात् । एतदाह—अयं हि एतत्प्रतिपाद्योऽपां स्वामी **वरुणः** तदात्मना[1] तिष्ठन् देवः **अघमर्षणः** पापानामभिभाविता तस्मादेतदनुभावेन प्रमुच्यते इति ॥

[53]रहस्यपापक्षयार्थं स्नाति—रज इति मध्येज्योतिर्जगती, पङ्क्तिर्वा[2] अक्षरसम्पदा ॥ **रजोभूमिः** कर्मफलानां भोगभूः **अमा** मद्व्यतिरिक्तं अनेन मन्त्रेण स्नानमाचरन्तं **रोदयस्व** रोदयतु दुःखयतु । पुरुषव्यत्ययः, पुण्यफलभूमेर्व्यावर्तयिता तुशब्दः । फलभूमिर्मा मोदयति रजोभूमिस्तु मद्व्यतिरिक्तं रोदयत्विति । यद्वा—हे देव! रजोभूम्यात्मा त्वं मद्व्यतिरिक्तं रोदयस्वेति । अमामिति

[1]स्थानि.

[2]प ङ्क्त्यादिर्वा.

**यस्त्व प्रवदन्ति धीराः। पुनन्तु ऋषयः पुनन्तु वसवः पुनातु वरुणः पुनात्वघमर्षणः। [54]आक्रान्थ्समुद्रः प्रथमे वि धर्मञ्जनयन्प्रजा भुवनस्य राजा ॥१०॥ वृषा पवित्रे अधि सानो अव्ये बृहथ्सोमो वावृ-**

प्रतिषेधार्थस्य अकारस्य 'सुप्सुपा' इति समासः। तेन समासान्तोदात्तत्वम्। अव्ययपूर्वपदप्रकृतिस्वरत्वे 'अव्यये नञ्कुनिपातानां' इति नञो ग्रहणात्। उक्तमवमर्षणस्नायिनं मां विहाय मद्व्यतिरिक्तं रजोभूमिर्दुःखयत्विति; इत्थमेवेदं कर्तव्यमिति **धीराः** धीमन्तः **प्रवदन्ति** प्रकर्षेण कथयन्ति। किंच—**ऋष्यादयो**ऽपि मां **पुनन्तु** अघमर्षणेन पूयमानं एतेऽप्यनुजानन्त्वित्यर्थः॥

[54]अथ जपति—आक्रानिति॥ अतः परास्त्रिष्टुभः आन्तादनुवाकस्य। अयं देवः **समुद्रः** समुद्रवत्यस्माद्विश्वमिति समुद्रः पृषोदरादिः। सर्वकारणं **व्याक्रान्** विक्रामति विविधकार्यवर्गरूपेण तिष्ठति। विक्रमेर्लुङि छान्दसे हलन्तलक्षणा वृद्धिः। इडभावे 'मोनोधातोः' इति नत्वम्। 'छन्दस्यपि दृश्यते' इत्याडागमः। कुतस्स्थित्वा आक्रानित्याह—**प्रथमे** आद्ये प्रथमस्वभावे[1] उपादानात्मनि **धर्मन्** धारणकुशले विश्वस्य। किमर्थमित्याह—**प्रजास्सर्वा जनयन्** हेतौ शता। **भुवनस्य** भूतजातस्य कृत्स्नस्य **राजा** स्वामी **वृषा** वर्षिता कामानां **पवित्रे** पावने स्मर्तॄणां[2] **सानो** सर्वस्मादुच्छ्रिते। वर्णव्यत्ययेन औकारस्य ओकारः, **अव्ये** अवनशीले प्रणवात्मनीति यावत्। 'अवतेष्टिलोपश्च' इ-

[1]प्रथिमस्वभावे. प्रधनस्वभावे. [2]सुनॄणां.

**वृधे सुवान इन्दुः । [55]जातवेदसे सुनवाम सोमम-रातीयतो निर्दहाति वेदः । स नः पर्षदति दुर्गा-**

त्यवतेर्मनिन्प्रत्यये ज्वरत्वरादिना ऊठि गुणे प्रत्ययस्य च टिलोपे ओमिति[1] भवति । अवतेश्छान्दसे यति अव्यम् । यद्वा—ऊठि 'तत्र साधुः' इति यति ओर्गुणे अवादेशे अव्यम् । स एवार्थः । ईदृशे व्योम्नि अधिष्ठातृत्वेन स्थित्वा विक्रामति । अथ[2]अयं इन्दुः ईश्वरः बृहत् भृशं वावृधे वर्धते सोमः उम इति विपर्यस्तस्वरप्रणवात्मिकया परया शक्त्या सहितः भृशं वर्धते अभिलषिताप्रतिहतवृद्धिः । तत्र देवांश्च सुवानः ईश्वरो भवन् स्वकार्ये अनुजानन् विश्वं वर्धमानम् । षु प्रसवैश्वर्ययोः, ताच्छीलिकश्चानश् । सूतेर्वा सुवानः विश्वमुत्पादयन् इति ॥

केचित्तु देवमादित्यात्मना वर्णयन्ति—समुद्द्रवन्त्यस्माद्रश्मय इति समुद्रः आदित्यः सः विक्रामति लोकत्रयं व्याप्य तिष्ठति प्रथमे प्रकृष्टे धर्मे जगद्रक्षणे स्थितः प्रकाशादिना प्रजा जनयन् भुवनस्य राजा स्वामी सः इन्दुः ईश्वरः विश्वमुत्पादयन् पवित्रे दशापवित्रे सानौ उच्छ्रिते अव्ये रक्षणशीले अधि उपरि अधिष्ठितस्सन् सोमलता सोमरसो भूत्वा वृषा यागद्वारेण वृष्टिहेतुः बृहद्वावृधे वर्धत इति ॥

[55]जातवेदस इति ॥ एतत्प्रभृतयः पञ्च दौर्गा मन्त्राः प्रकरणादात्मनि व्याख्येयाः । चोरव्याघ्रपिशाचादिभये समुपस्थिते दौर्गत्ये च जपहोमादिकर्म एभिः कुर्यात् । **जातवेदसे** जातानां वेदित्रे नित्याविर्भूतज्ञानादिकाय वा देवाय **सोमं सुनवाम**

[1]ओदिति. [2]यथा.

**णि विश्वा॑ ना॒वेव॒ सिन्धुं॑ दुरि॒ताऽत्य॒ग्निः ।** [56]**ताम॒ग्नि-
व॑र्णां॒ तप॑सा ज्वल॒न्तीं वै॑रोच॒नीं क॑र्मफ॒लेषु॒ जुष्टा॑म् ।
दु॒र्गां दे॒वीꣳ शर॑णम॒हं प्रप॑द्ये सु॒तर॑सि तरसे॒ नमः॑ ।**
[57]**अग्ने॒ त्वं पा॑रया॒ नव्यो॑ अ॒स्मान्थ्स्व॒स्तिभि॒रति॑ दु॒-**

---

तदाराधनाय अभिषुतसोमास्स्याम । अथ तस्य तत् **वेदः** ज्ञानादिकं अस्माकं **अरातीयतः** शत्रुत्वमिच्छतः जातान् **निदहाति** नियमेन दहतु । लेट्याडागमः । किंच—**स** देवः **नः** अस्मान् **पर्षत्** पालयतु । पृणातेः लेटि सिप् । **विश्वा** विश्वानि **दुर्गाणि** स्थानानि संसारादीनि अतीत्य पालयतु । दुरितानि दुःखितानि च विश्वान्यतीत्य पालयतु **नावा सिन्धुमिवा**तीत्य स्थितान् कृत्वा अस्मान् पालयतु । **अग्निः** अग्रणीः दुर्गारूपोऽग्निविशेषः प्रतिपाद्यते । तद्भावेन देवस्यैव वर्णना । भावनामयसोमयागाराधितः शत्रुत्वमस्माकमिच्छतो विषयादीन् नियमेन नाशयतु संसारनिमित्तविषयदुरितात्ययेनास्मान् पालयत्विति ॥

[56]तामिति ॥ **तां अग्निवर्णां** ज्योतीरूपां **तपसा** तपस्सामर्थ्येन **ज्वलन्तीं** दीप्यमानां **वैरोचनीं** विरोचनस्य विविधरोचनस्य विविधमाविर्भवतः देवस्य स्वभूतां परप्रकृतिं **कर्मफलेषु** कर्मसु तत्फलेषु च **जुष्टां** सामर्थ्याधायकत्वेन स्थितां **दुर्गां देवीं** देवनवतीं **अहं शरणं प्रपद्ये** हे देवि! **तरसे**! तरस्विनि! तरणकुशले! । अर्शआदित्वादच् । त्वमेव **सुतरासि** सुष्ठु तारयसि संसारगर्तात् । अन्तर्भावितण्यर्थस्तरतिर्द्रष्टव्यः तस्यै तुभ्यं **नमः** ॥

[57]अग्ने त्वमिति व्याख्याता ' उभा वां '* इत्यत्र । अत्र तु परवस्तुपरतया व्याख्येया ॥

---

*तै. सं. १-१-१४.

गाणि विश्वा । पूृथ्वी पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शंयोः । [58]विश्वानि नो दुर्गहा जातवेदस्सिन्धुं न नावा दुरिताऽतिपर्षि । अग्ने अत्रिवन्मनसा गृणानोऽस्माकं भूत्ववित्ता तनूनाम् । [59]पृतनाजितꣳ सहमानमग्निमुग्रꣳ हुवेम परमाथ्सधस्थात् । स नः पर्षदति दुर्गाणि विश्वा क्षामद्देवो अति दुरिताऽत्यग्निः । [60]प्रत्नोषि कमीड्यो अध्वरेषु

[58]विश्वानि न इति 'जुष्टो दमूनाः'* इत्यत्र व्याख्याता ॥

[59]पृतनाजितमिति ॥ पृतनानां तत्त्वसङ्घातानां जेतारं **अग्निं** अग्रण्यं सर्वस्य **उग्रं** उद्गूर्णं सर्वदा **हुवेम** आह्वयामः आह्वानेन वशीकुर्मः । ह्वयतेः 'बहुलं छन्दसि' इति संप्रसारणम् । **परमात् सधस्थात्** प्रकृष्टं सहस्थानं परमव्योमात्मकं अभिव्याप्य तत्र स्थिततया ध्यायाम इति 'सध्रमादस्थयोः' इति सधादेशः । **स** चास्माभिराहूतः अग्रणीः **देवः विश्वानि दुर्गाणि** विश्वानि च दुरितानि विश्वं चराचरं **क्षामत्** क्षयशीलं वस्तु अतीत्य **पर्षत्** पालयतु पूरयतु वा । क्षै क्षये, क्विबन्तान्मतुप् मनिन्वा । तकारोपजनश्छान्दसः ॥

[60]प्रत्नोषीति ॥ हे **अग्ने!** अग्रणीः! **अध्वरेषु** यज्ञेषु **कं** सुखं स्वर्गात्मकं त्वं **प्रत्नोषि** प्रतनोषि 'तनिपत्योश्छन्दसि' इति उपधालोपः । **ईड्यः** सर्वेषु स्तुत्यः **सनात्** पुरातनश्च **होता नव्यः**

*तै. ब्रा. २-४-१.

सनाच्च होता नव्यश्च सत्सि । स्वां चाग्ने तनुवं पिप्रियस्वास्मभ्यं च सौभगमा यजस्व ॥ ११ ॥

परस्ताद्यशो गुहासु मम सुवर्णपक्षाय धीमहि शतबाहुना पुनःपुनरजायत सुवो राजा सधस्थात्रीणि च ॥ १ ॥

[1]भूरग्नये पृथिव्यै स्वाहा भुवो वायवेऽन्तरिक्षाय स्वाहा सुवरादित्याय दिवे स्वाहा भूर्भुवस्सुव-

---

नूतनश्च होता देवो मानुषश्च तदुभयं भूत्वा सत्सि सीदसि अध्वराणां कर्ता च त्वमेवेति सदेर्लेटि 'बहुलं छन्दसि' इति शपो लुक् । स त्वं आत्मीयां तनुं प्रपञ्चात्मिकां पिप्रियस्व तर्पयस्व । यद्वा—आत्मीयतनुस्थानीयविज्ञानात्मनः प्रीणय । प्रीङ् तर्पणे । शपः श्लुः । अस्मभ्यं च[1] सौभगं सौभाग्यं देहशोभां त्वदीयतनूचितां निवृत्तसमस्तदुःखरूपतां आयजस्व आभिमुख्येन देहि च । 'सुभगं मन्त्रे' इत्युद्गात्रादिषु पाठादञ् । 'चवायोगे प्रथमा' इति प्रथमाख्यातस्य निघाताभावः ॥

इति याज्ञिकीषूपनिषत्सु प्रथमोऽनुवाकः.

---

[1]भूरग्नय इत्याद्यास्त्रयोऽनुवाकाः व्यष्टिसमष्टिरूपेण ब्रह्मण एव प्रतिपादकाः महाव्याहृतिनामानः ब्रह्मोपासनायां कर्मव्याप्त्यादिषु[2]च विनियुक्ताः । तत्र भूर्भुवस्सुवरिति व्याहृतयः सृष्ट्यर्थं तपस्तप्यमानेन प्रजा-

[1]अस्मभ्यं च तवैव अनुभूतेभ्यः सौभगेभ्यः. [2]कर्मव्यापत्त्यादिषु.

श्चन्द्रमसे दिग्भ्यस्स्वाहा नमो देवेभ्यस्स्वधा पितृभ्यो भूर्भुवस्सुवरोम् ॥ १२ ॥ २ ॥

[1]भूरन्नमग्नये पृथिव्यै स्वाहा भुवोऽन्नं वायवेऽन्तरिक्षाय स्वाहा सुवरन्नमादित्याय दिवे स्वाहा भूर्भुवस्सुवरन्नं चन्द्रमसे दिग्भ्यस्स्वाहा नमो देवेभ्यस्स्वधा पितृभ्यो भूर्भुवस्सुवरन्नमोम् ॥ १३ ॥ ३

पतिना व्याहृतत्वात् । यथा—'स भूरिति व्याहरत् । स भूमिमसृजत'* इत्यादि । आसां परिणामोऽन्नयादयः पृथिव्यादयश्च एतदधीनस्थितिका वा । स्वाहाकारसम्बन्धेऽपि निपातत्वात् चतुर्थ्यभावः । भूरित्येतां व्याहृतिं एतत्सम्बन्धिनीं पृथिवीं अग्निं चानया स्वाहाकृतयाऽऽहुत्या तर्पयामीति । एवं सर्वत्र । व्याहृतित्रयाधीनस्थितिकाश्चन्द्रमाः दिशश्च । अथ एतल्लोकत्रयवासिभ्यो देवेभ्यो नमः । पितृभ्यस्स्वधाऽस्तु । अथ एवंप्रभावव्याहृतित्रयाविभागावस्थं परं ब्रह्म अहमस्मीति उपासनाविधित्वेन योज्यम् । व्याख्यातः प्रणवः† ॥

इति याज्ञिकीषूपनिषत्सु द्वितीयोऽनुवाकः.

---

[1]भूरन्नमिति ॥ आनन्दब्रह्मणा ताद्रूप्येण व्याहृत्यादीनामुपासनामात्रं अत्रानुवाके विशेषः । इतरत्समानम् । ईदृक्प्रभावव्याहृतित्रयात्मकमन्नं तदात्मना प्रणवेन प्रतिपाद्यं ब्रह्माहमस्मि इति ॥

इति याज्ञिकीषूपनिषत्सु तृतीयोऽनुवाकः.

---

*ब्रा. २-२-४. †आ. ५-८.

[1]भूरग्नये च पृथिव्यै च महते च स्वाहा भुवो वायवे चान्तरिक्षाय च महते च स्वाहा सुवरादित्याय च दिवे च महते च स्वाहा भूर्भुवस्सुवश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहा नमो देवेभ्यस्स्वधा पितृभ्यो भूर्भुवस्सुवर्महरोम् ॥ १४ ॥ ४ ॥

[1]पाहि नो अग्न एनसे स्वाहा। पाहि नो विश्ववे-

---

[1]भूरग्नये चेति ॥ अत्र परस्य ब्रह्मणो वाचिका चतुर्थी व्याहृतिः प्रणवपर्यायतयोपादीयत इति विशेषः । यथोक्तं 'भूर्भुवस्सुवरिति वा एतास्तिस्रो व्याहृतयः । तासामु ह स्मैतां चतुर्थीम् । माहाचमस्यः प्रवेदयते । मह इति । तद्ब्रह्म'* इति भूरादिभ्यो व्यष्टिभ्यः तत्समष्टये महते देवाय स्वाहा । शिष्टं तुल्यम् । व्याहृतित्रयस्यात्मभूता या चतुर्थी मह इति यथा—'स आत्मा। अङ्गान्यन्या देवताः'* इति तया चतुर्थ्या प्रणवे च प्रतिपाद्यं महद्वस्त्वहमस्मीति । महरोमिति रेफविकल्पः ॥

इति याज्ञिकीषूपनिषत्सु चतुर्थोऽनुवाकः.

---

[1]पाहि न इति ॥ इत उत्तरे अनुवाका उपासनार्थाः[1] । हे अग्ने! अग्रणीः! नः अस्मान् पाहि एनसे एनसः । विभक्ति-

---

*आ. ५-५.

[1]उपासनाख्याः.

**दसे स्वाहा । यज्ञं पाहि विभावसो स्वाहा । सर्वं पाहि शतक्रतो स्वाहा ॥ १५ ॥ ५ ॥**

**[1]यश्छन्दसामृषभो विश्वरूपश्छन्दोभ्यश्छन्दाꣳस्याविवेश । सताꣳ शिक्यः प्रोवाचोपनिषदिन्द्रो**

---

व्यत्ययः । यद्वा—एनोरूपेण हिंसते तुभ्यं नमः तथा पाह्यस्मान् संसारात् तुभ्यं **विश्ववेदसे** विश्वस्य वेदित्रे लब्ध्रे वा संसारात्मकाय नमः हे **विभावसो**! प्रभाधन! **नः** अस्मदीयं **यज्ञं** ज्ञानात्मकं **पाहि** त्वमेव जानासि तथा हे **शतक्रतो**! विचित्रानन्तकर्मन्! अस्मदीयं **सर्वं** कर्म उपासकानां ज्ञानं च पाहि करोमीति[1] । स्वाहाकारान्तपादचतुष्टया अनुष्टुबेषा ॥

इति याज्ञिकीषूपनिषत्सु पञ्चमोऽनुवाकः.

---

[1]यश्छन्दसामिति ॥ **छन्दसां** मन्त्राणां **ऋषभः** प्रधानभूतः **विश्वरूपः** वेदेतिहासपुराणवाङ्मयरूपः **छन्दोभ्यः** वेदेभ्यः आविर्भूतः पुनरपि **छन्दांसि** गायत्र्यादीनि विभक्तात्मा **आविवेश** पुनश्च कीदृशः **सतां** विदुषां शक्तिहेतुः शक्नुवन्त्यनेनेति **शिक्यः** । 'शकिसहोश्च' इति करणे कृत्यप्रत्ययः । वर्णान्यत्वं छान्दसम् । स इति सामर्थ्याल्लभ्यते । सः **प्रोवाच इन्द्रः** ईश्वरः प्राणात्मा परमात्मोच्यते **ज्येष्ठः** प्रशस्यतमः **उपनिषत्** तत्प्रतिपाद्यत्वात् ताच्छब्द्यम् । यद्वा—उपनिषत् ऋषीणां समीपे निषीदन् । यद्वा—तां उपनिषदं स प्रोवाच । द्वितीयाया लुक् । स इत्यस्यानुदात्तत्वं मृग्यम् । किमर्थं **इन्द्रियाय** इन्द्रेण **दृष्टं**

---

[1]पाहिति करोषीति.

ज्येष्ठ इन्द्रियाय ऋषिभ्यो नमो देवेभ्यस्स्वधा पितृभ्यो भूर्भुवस्सुवरोम् ॥ १६ ॥ ६ ॥

[1]नमो ब्रह्मणे धारणं मे अस्त्वनिराकरणं धारयिता भूयासं कर्णयोश्श्रुतं मा च्योढ्वं ममामुष्य ओम् ॥ १७ ॥ ७ ॥

---

कर्म इन्द्रियं तदर्थं तत्सिद्ध्यर्थम् । यद्वा—इन्द्रियाय वीर्याय शक्तिमत्त्वाय । ऋषिभ्यः प्रोवाच नमः अन्नं तत्साधनं देवेभ्यः प्रोवाच स्वधा अमृतं पितृभ्यः प्रोवाच कथं भूर्भुवस्सुवरोमिति समस्तप्रवचनात्मकभूरादिव्याहृतित्रयात्मा ओङ्कार एवायमुपासितव्य इति भगवान् ऋषिभ्यः प्रोवाच । तस्मादित्थमुपासितव्य इति गम्यते ॥

इति याज्ञिकीषूपनिषत्सु षष्ठोऽनुवाकः.

---

[1]नमो ब्रह्मण इति ॥ नमो ब्रह्मणे परस्मै । प्रह्वीभावो नमश्शब्दार्थः । तद्भावापत्तिः तदर्थं धारणं ऐकाग्र्यं मे अस्तु । तत् कथं स्यादित्याह—अनिराकरणं अबाधितप्रतिष्ठम् । धारयिता धारणायाः कर्ता भूयासम् । हे तत्परिपन्थीनि! इन्द्रियाणि! कर्णयोश्श्रुतं उभयमपि प्रदर्शनार्थं सर्वैरिन्द्रियैः इतः पूर्वं स्वविषया अनुभूताः इदानीं यूयं मा च्योढ्वं मा ब्रह्मणश्च्युतानि भूत । कस्य मम अमुष्य । अद इति परं ब्रह्माह । तदात्मनो ब्रह्मीभूतस्य मम मा च्योढ्वम् । ओमिति व्याप्तिं भावय [व्याप्तिभावाय]उपासीत इति दर्शयति । ईषाअक्षादित्वात् प्रकृतिभावः ॥

इति याज्ञिकीषूपनिषत्सु सप्तमोऽनुवाकः.

---

[1]ऋतं तपस्सत्यं तपश्श्रुतं तपश्शान्तं तपो दानं तपो यज्ञस्तपो भूर्भुवस्सुवर्ब्रह्मैतदुपास्वैतत्तपः ॥ १८ ॥ ८ ॥

[1]यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो वात्येवं

[1]ऋतं तप इत्यादि ॥ ऋतं मानसं तथ्यम् । सत्यं वाचिकं तथ्यम् । श्रुतं वेदार्थज्ञानं तदर्थशास्त्रज्ञानं च । शान्तं शान्तिः मिथ्येन्द्रियाणामप्रवृत्तिः । दानं स्वत्वनिवृत्तिः अर्थेषु परस्वत्वापत्तिपर्यन्ता । यज्ञः द्रव्यदेवतादिसम्बन्धोऽग्निहोत्रादिलक्षणः । एतत्सर्वं श्रौतं स्मार्तं च तपःकृच्छ्रादिसाध्यम् । स्वातन्त्र्यख्यापनार्था तपश्शब्दावृत्तिः । इदानीं ऋतादीनां मुक्तिहेतुत्वात् परज्ञानं प्रति गुणभावं मन्यमानः तदेव प्रकृष्टं तप इति दर्शयति—भूर्भुवस्सुवरित्येतदात्मकं ब्रह्मोपास्व हे साधो ! । एतत् तपः इयमुपासनैव प्रकृष्टं तपः । ऋतादीनि त्वस्याङ्गतया कुरु तपःपूर्वकत्वात् ज्ञानावाप्तेः । यथोक्तं—'तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्म '* इति । तस्मादृतादीन्युपासना[1]हेतुत्वात् कर्तव्यानीति ॥

इति याज्ञिकीषूपनिषत्सु अष्टमोऽनुवाकः.

---

[1]यथा वृक्षस्येति ॥ उपासनाशेषतया पुण्यापुण्ययोस्स्तुतिनिन्दे अनेनानुवाकेन विधीयेते । यथा वृक्षस्य उद्यानादौ स्थितस्य चम्पकपाटलपुन्नागादेः संपुष्पितस्य दूरात् गन्धो वाति गच्छ-

---

*आ० ५-१५. [1]उपासनासाधन. उपासनासामर्थ्य

**पुण्यस्य कर्मणो दूराद्गन्धो वाति यथाऽसिधारां क- र्तेऽवहितामवक्रामेद्यद्युवे युवेह वा विह्वलिष्यामि**

ति दिगन्तेषु विसर्पति स्वयमेव एवं पुण्यस्य शास्त्रोक्तस्याग्नि- होत्रादेः प्रशस्तस्य **कर्मणो गन्धः** गन्धनं प्रकाशनं **दूरात् वाति** दिगन्तेषु प्रथते । ततः यावत् प्रथा तावत् स्वर्गे महीयते न कदाचिच्च्यवते तस्मात् पुण्यार्थं यतेतेति । अथ पापस्य यत्नेन परिहर्तव्यतामाह—यथेति । **यथा** लोके निरूपको जनः **अ- सिधारां कर्ते** गर्ते कूपादौ **अवहितां** निजकौशलप्रकटनार्थ- मात्मनैवावस्थापितां **अवक्रामेत्** आक्रम्य[1] गच्छेत् यथा असिधारां न प्रविशति कर्ते च न निपतति तथा अतिक्रम्य गन्तुमिच्छतीति रूपयति । यदि **युवे** 'युव यौवने मिश्रीभावे च' 'यु मिश्रणे'। मिश्रीभवामि । वचनव्यत्ययः । पादाभिप्रायं वा द्विर्वचनम् । इह वेह वा । वर्णान्यत्वं छान्दसम् । इह वा असिधारां यौमि इह वा कर्ते यौमि उभयथाऽप्यनिष्टमेव । तथाहि—असिधाराप्रवेशे **वि- ह्वलिष्यामि** चरणकर्तनविह्वलितो भविष्यामि । कर्तनिपातने कर्त- मेव **पतिष्यामि** इति अनुप्रवेक्ष्यामि नोत्तरणं लक्ष्ये । तस्मादु- भयमपि परिहर्तव्यमिति निरूपयन् अवक्रामति निरूपकः । एवं **अमृतात्** अपुण्यात् क्रियमाणात् करिष्यमाणाच्च **आत्मानं जुगुप्सेत्** तत्र प्रवृत्तिप्रसङ्गे आत्मानं निन्दित्वा निवारयेत् । विषयेभ्यो वैषयिकेभ्यश्च सुखेभ्यो निवर्तयेदिति प्रदर्शनार्थं परिहर्तव्यद्वयो- पादानम् । अस्यापि वर्णान्यत्वं छान्दसम् । यद्वा—असंव्यवहा- र्यत्वं दृष्टं नरकपतनं चादृष्टमित्युभयोरपि परिहर्तव्यतामुभयो-

[1] अतिक्रम्य.

**कृतं पतिष्यामीत्येवममृतादात्मानं जुगुप्सेत् ॥**
**॥ १९ ॥ ९ ॥**

**[1]अणोरणीयान्महतो महीयानात्मा गुहायां**

---

पादानेन सूचयति सर्वथा अनृतात् आत्मानं परिहर्तुं यतेतेति ॥

इति याज्ञिकीषूपनिषत्सु नवमोऽनुवाकः.

---

[1]अणोरणीयानित्येतावनुवाकौ परमात्मोपवर्णनत्वात् महापुरुषाराधनायां विनियुक्तौ ॥ तत्र त्रैष्टुभोऽयमनुवाकः । विशेषो वक्ष्यते । **अणोः** सूक्ष्मात् बिसतन्त्वादेरपि **अणीयान्** निरूपणपदवीमतिक्रान्तत्वात् **महतः** स्थूलात् पृथिव्यादेरपि **महीयान्** महत्तरः स्थूलतरः तन्मयत्वाद्विश्वस्य **आत्मा** व्यापी परमात्मा **अस्य** शरीरिणः **जन्तोः गुहायां** गुह्ये संवृते हृदयाकाशे **निहितः** नित्यसंनिहितः अविकृतात्मैव परैक्येन तिष्ठति जन्तोरनुग्रहाय । परवस्तुनैव वा जन्तोरनुग्रहार्थं हृदि निहितः तिष्ठति । तद्धि इमं देशं परमात्मलक्षणं प्राप्य जन्तोर[1]नुग्रहादिकर्माणि करोति । निष्ठायां 'गतिरनन्तर' इति पूर्वपदप्रकृतिस्वरत्वम् । केचिदाहुः—महतो महीयान् महापरिमाणादाकाशादिदेशादपि महान् अप्रमाणः स्वतोऽयमिदानीं अस्य जन्तोरनुग्रहार्थं हृदयाकाशे निहितः अणोरणीयान् वर्तते सङ्कुचितात्मा तिष्ठति । सापि मात्रा परममात्रया तुल्यमहिमा । यथा—'यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः'* इति । तं इममात्मानं **अक्रतुं** अकर्माणं निष्प्रपञ्च[2]कालुष्यं अव्यक्तावस्थं **पश्यति** वेत्ति अनु-

---

[1]जगतो. *छान्दो. ८-१. [2]निष्प्रपञ्चत्व.

**निहि॑तोऽस्य ज॒न्तोः । तम॑क्रतुं पश्यति वीतशो॒-को धा॒तुः प्र॒सादा॑न्महि॒मान॑मी॒शम् । [2]स॒प्त प्रा॒णाः प्र॒भव॑न्ति त॒स्मा॑थ्स॒प्तार्चिष॑स्स॒मिध॑स्स॒प्त जि॒ह्वाः । स॒प्त इ॒मे लो॒का येषु॒ चर॑न्ति प्रा॒णा गु॑हाशयां॒ नि-**

---

भवति **वीतशोकः** वीतदुःखः जनः उपासकः **धातुः** परस्य देवस्य येनायमात्मा निहितो भवति तस्य **प्रसादात्** अनुग्रहेण पश्यति। यथा 'यमेवैष वृणुते तेन लभ्यः'* इति । कोऽस्य विशेष इत्याह—**महिमानं** महत्त्वं परस्य विभूतिं अतः तत्प्रसादेनैव पश्यति । पुनश्च कीदृशमित्याह—**ईशं** कृत्स्नोपादानसमर्थं ईदृशं आत्मानं धातुः प्रसादादेव पश्यति । तस्मात् सा परा देवता प्रसीदतु । तां वयं प्राप्नुयामेति वेदितव्योऽयमात्मा । यथोक्तं 'ब्रह्मविदाप्नोति परं'† इति । एवमात्मोपासकः परेण वृतो मुच्यत इति तदुपासनाविधिरयमनुवाकः ॥

[2]उक्तमीशमिति तामेव विश्वोपादानशक्तिमस्य प्रपञ्चयति—सप्त प्राणा इति ॥ चरन्तीति तृतीयपादान्तः । **तस्मात्** आत्मनः सप्त **प्राणाः** जन्तूनां प्राणयितारः चक्षुरादयः प्राणाः शरीरगताः **प्रभवन्ति** प्रथमत उत्पद्यन्ते । सप्तस्कन्धाधिष्ठानाः सप्तवायवो वा । तथा **सप्तार्चिषः** 'सप्त सूर्या दिवमनुप्रविष्टाः'‡ इति । आदित्यादीनि वा[1] सप्त ज्योतींषि । **सप्त समिधः** समिद्धा अग्नयः गार्हपत्यादयः पञ्च और्ववैद्युतौ च । **सप्त जिह्वाः** अग्नेर्जिह्वास्थानीयाः सप्तज्वालाः । **सप्त इमे** च **लोकाः** भूरादयः

---

*कठो. २-२२. †तै. उ. २-१. ‡आ. १-७. [1]आदित्यात्मकानि वा-

**हिताः सप्त सप्त । [3]अतः समुद्रा गिरयश्च सर्वेऽस्मा-**
**त्स्यन्दन्ते सिन्धवः सर्वरूपाः । अतश्च विश्वा ओ-**
**षधयो रसाश्च येनैष भूतस्तिष्ठत्यन्तरात्मा ।**

---

सत्यलोकपर्यन्ताः । ईषाअक्षादित्वात् प्रकृतिभावः । **येषु** लोकेषु **चरन्ति प्राणाः** प्राणिनस्सर्वे प्राणन्तीति प्राणाः । यद्वा—येषु चरन्ति प्राणाः चक्षुरादयः, ते च सप्त महदादयः कीदृशाः **गुहाशयां** गुहायां **निहिताः** गुहायां शयनमभिलक्ष्य निहिताः गुह्याः महदादयः । यद्वा—गुहाशयाः शयानाः 'सुपां सुलुक्' इति जसः आदेशः (?) । **निहिताः** स्थापिताः येऽप्यन्ये **सप्तसप्त** सप्तसङ्ख्यावच्छिन्नाः सप्त छान्दांसि सप्तस्वराः इत्येवमादयः ते सर्वे तस्मादेव प्रभवन्ति । यद्वा—सप्तसप्त ये च अन्येऽपि विविध[1]-स्फुरिताः ते सर्वे तस्मादेव प्रभवन्ति ॥

[3]अतस्समुद्रा इति ॥ **अतः** परमात्मनः **समुद्रा गिरयश्च** कुलपर्वताः उपपर्वताश्च प्रभवन्ति । **अस्मात्** एव **सर्वरूपाः** कूप्यपल्वल्यनादेयरूपाः **सिन्धवः** आपः स्यन्दनात् सिन्धवः । यद्वा—द्युपृथिव्यन्तरिक्षस्थिता विश्वरूपाः सिन्धवः नद्यः **प्रभवन्ति** । किञ्च—**अत** एव **विश्वाः** बहुभेदभिन्नाः **ओषधयः** व्रीह्यादयः प्रभवन्ति । **रसाश्च** मधुरादयः अत एव प्रभवन्ति । **अयं अन्तरात्मा** जीवात्मा च परमात्मना हेतुना तद्बलेन **भूतः** परिनिष्पन्नः भोक्तृतां प्राप्तः **तिष्ठति** स एव भोक्तृभावेन शरीरमध्ये तिष्ठतीति भोक्तृभोग्यात्मकः कृत्स्नः प्रपञ्चः तस्मात् प्रभवतीत्युक्तम् ॥

---

[1]विविधं.

[4]ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम्। श्येनो गृध्राणाꣳ स्वधितिर्वनानाꣳ सोमः पवित्रमत्येति रेभन्न् । [5]अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीꣳ सरूपाम् । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगाम-

[4]ब्रह्मा देवानामिति ॥ व्याख्याता 'त्वमग्ने बृहद्वयः'* इत्यत्र । अयमेव तद्रूपेण वर्तत इति योज्यम् ॥

[5]अजामेकामिति ॥ **अजां** अजननशीलां अप्रसवधर्मिणीं प्रकृतिम् । पचाद्यचि अन्तोदात्तत्वम् । आख्यैषा प्रकृतेः । **एकां** सर्वभोक्तृसाधारणीं **लोहितशुक्लकृष्णां** लोहितं रजः शुक्लं सत्त्वं कृष्णं तमः एवं साम्यावस्थात्मिकां **बह्वीं** सुरनरतिर्यगादिभेदभिन्नाम् । **प्रजां** विकारात्मिकां **सुरूपां** सुगुणां त्रिगुणात्मिकां **जनयन्तीं** उत्पादयन्तीम् । प्रकरणात् परमात्मनस्सम्भूतामिति गम्यते । तां तादृशीं **एकः** कश्चित् **अजः** अजननशीलः भोगलोलुपबुद्धिः । पूर्ववदच् । **जुषमाणः** तद्भोगेन प्रीयमाणः **अनुशेते** अनुभुङ्क्ते कर्मवशात् सानुशय इव पुनः तां भुङ्क्ते । अथ **अन्यः** कश्चिन्मुक्तः **एनां** अजां **भुक्तभोगां** भुक्तभोक्तव्यां कर्मक्षयात् भोक्तव्यशेषशून्यां तेन प्रयोजनाभावात् **जहाति** त्यजति । कीदृशः अजः परमात्मीभूतः नित्यः न जायत इत्यजः । 'अन्येष्वपि दृश्यते' इति डः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । एवं बन्धहेतोः परमात्मनः उत्पत्तिः मुक्तात्मनश्च परमात्मनो[1]पसंहारश्चोभयमनेनोक्तम् ॥

*सं. ३-४-११.

[1]परमात्मन्यु.

**जो॑ऽन्यः ॥२०॥ [6]ह॒ꣳस॒श्शु॑चि॒षद्वसु॑रन्तरिक्ष॒सद्धो॑ता वे॑दि॒षदति॑थिर्दुरोण॒सत् । नृ॒षद्व॑र॒सदृ॑त॒सद्व्यो॑म॒सद॒ब्जा गो॒जा ऋ॑त॒जा अ॑द्रि॒जा ऋ॒तं बृ॒हत् । [7]य॒स्माज्जा॒ता न पु॒रा नैव किंच॒नास॒ य आ॑वि॒वेश॒ भु॑व॑नानि॒ विश्वा॑ । प्र॒जाप॑तिः प्र॒जया॑ संवि॒दा॒नस्त्रीणि॒ ज्योती॑ꣳषि सचते॒ स षो॑ड॒शी । [8]वि॒ध॒र्तार॒ꣳ**

---

[6]हंसश्शुचिषदिति जगती ॥ व्याख्यातेयं 'इन्द्रस्य वज्रोसि'* इत्यत्र । एवं कृत्यभेदेन परमात्मैव बहुधा वर्तत इति योज्यम् ॥

[7]यस्माज्जातेति ॥ विश्वानि भुवनानि यस्माज्जातानि न परा परस्मात् कुतश्चित् जातानि । पूर्वत्र 'शेश्छन्दसि' इति लोपः । उत्तरत्र 'सुपां सुलुक्' इत्याकारः । किं सत्येव परस्मिन् नेत्याह—नैव किञ्चनास यस्मात् परस्मात्[1] नैव किञ्चिदस्तीति तस्मादेव जातानि । किंच—तानि विश्वानि भूतानि य आविवेश अनुप्रविश्य तिष्ठति । यथा—'तत्सृष्ट्वा । तदेवानुप्राविशत्'† इति । स प्रजापतिः प्रजानां पालयिता पालनार्थी प्रजया संविदानः ऐकमत्यं गतः उपचिकीर्षुर्भूत्वा षोडशी षोडशभिर्विकारैर्भूतेन्द्रियैस्तद्वान् साहाय्यकानुत्पाद्य तैस्सहितः त्रीणि ज्योतींषि द्योतमानान् लोकान् ज्योतिष्मतो वा सचते समवैति अनुप्रविश्य धारयति ॥

[8]विधर्तारमित्याद्याः गायत्र्यः ॥ विधर्तारं विविधं धारयितारं प्रजानां अनुज्ञातारं वा सवितृरूपेण जगदनुगृह्णानं परमात्मानं

---

*सं. १-८-१५. [1]परं. †उ. २-६.

हवामहे वसोः कुविद्वनाति नः । सवितारं नृचक्षसम् । [9]अद्या नो देव सवितः प्रजावत्सावीस्सौभगम् । परा दुष्ष्वप्निय॑ꣳ सुव । [10]विश्वानि देव सवितर्दुरितानि परासुव । यद्भद्रं तन्म आसुव ॥ २१ ॥ [11]मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वी-

---

**नृचक्षसं** नृणां साक्षिणं शुभाशुभानां कर्मणां द्रष्टारं **हवामहे** स्तुत्या आह्वयामः । स च **नः** अस्मभ्यं **वसोः** वसु वरिष्ठं धनं **वनाति** ददातु । लेटचाडागमः । **कुवित्** बहु । 'निपातैर्यद्यदिहन्त' इति निघाताभावः ॥

[9]**अद्या न इति** ॥ हे **देव! सवितः!** सर्वस्यानुज्ञातः! **अद्य** अस्मिन्नहनि अस्मभ्यं **प्रजावत्** प्रजासमृद्धिमत् **सौभगं** सौभाग्यं सुश्रीकत्वं **सावीः** अनुजानीहि । छान्दसे लुङि 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः । 'सुभगं मन्त्रे' इति सुभगशब्दादञ् । किञ्च—**दुष्ष्वप्नियं** दुस्स्वप्नप्रभवं **परासुव** नाशय । 'भवेच्छन्दसि' इति दुस्स्वप्नाद्यत् । छान्दस इकारोपजनः ॥

[10]विश्वानीति ॥ हे **देव! सवितः! विश्वा** विश्वानि **दुरितानि परासुव** नाशय । किं विशेष्यते—दुष्ष्वप्नचामिति । **यत् भद्रं** कल्याणं **तत्** सर्वं **मे आसुव** मदीयत्वेन अनुजानन् आनय ॥

[11]**मधु वाता** इति[1] ॥ मननीयत्वात् रसत्वाद्रसनीयत्वात् वा-**मधु** ब्रह्म । तदेव भूत्वा तद्वन्तो **वाता** वान्तु **ऋतायते** ऋतं यज्ञं इच्छते यजमानय । **सिन्धवः** अपि मधुमत्यः **क्षरन्तु**

---

[1]इति तिस्रो गायत्र्यः.

र्नस्सन्त्वोषधीः । [12]मधु नक्तमुतोषसि मधुमत्पार्थिवꣳ रजः । मधु द्यौरस्तु नः पिता । [13]मधुमान्नो वनस्पतिर्मधुमाꣳ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः । [14]घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतमुवस्य धाम । अनुष्वधमावह मादयस्व स्वाहा-

---

ओषधयोऽपि **माध्वीः** माध्व्यः मधुमत्यस्सन्तु । 'ऋत्व्यवास्त्व' इति निपात्यते । 'छन्दसि' इति पूर्वसवर्णदीर्घत्वम् ॥

[12]**मधु नक्तमिति** ॥ मध्वेवास्तु अस्माकं **नक्तं** रात्रौ उषसि अपि अहन्यपि । **पार्थिवं रजः** पृथिव्याख्यो लोकः मधुमानस्तु । **द्यौश्च पिता नः** अस्माकं मधुमत्यस्तु ॥

[13]**मधुमान्न इति** ॥ **वनस्पतिश्च** अस्माकं **मधुमानस्तु** । **सूर्योऽपि मधुमानस्तु गावोऽपि** मधुमत्यस्सन्तु अस्माकम् ॥

[14]**घृतमिति** ॥ इतः परास्त्रिष्टुभः । अग्न्यात्मना परमात्मनस्स्तुतिः । **घृतं** अनेन **मिमिक्षे** सिच्यते उत्पाद्यते वा यागद्वारेणैव उदकमुत्पाद्यते । **अस्य** अग्नेः **घृतं योनिः** कारणं उदकपातस्य सर्वकारणत्वात् । **घृते** अयं **श्रितः** अवस्थितः तत्प्रियत्वात् । **घृतं उ** एव **अस्य धाम** स्थानं विश्रमस्थानम् । इदानीं प्रत्यक्षवदुच्यते—हे अग्ने! त्वं **अनुष्वधं** अन्वन्नं हवींष्यात्मानं **आवह** मादयस्व माद्य च हविषा । किंच **स्वाहाकृतं** स्वाहाकारेणास्माभिर्दत्तं **हव्यं वक्षि** वह । तेन आत्मानं तर्पयस्व । तेन सर्वतृप्तिस्स्यात् हे अग्न्यात्मन्! । **वहेर्लेटि शपो लुक्** ॥

कृतं वृषभ वाक्षि ह॒व्यम् । [15]स॒मु॒द्रादू॒र्मिर्मधु॑मा॒ꣳ उ-दा॑रदु॒पा॒ꣳशुना॒ सम॑मृत॒त्वमा॑नट् । घृ॒तस्य॒ नाम॒ गुह्यं॒ यदस्ति॑ जि॒ह्वा दे॒वाना॑म॒मृत॑स्य॒ नाभिः॑॥२२॥ [16]व॒यं नाम॒ प्रब्र॑वामा घृ॒तेना॒स्मिन् य॒ज्ञे धा॑रयामा

[15]समुद्रादिति ॥ **समुद्रात्** सर्वार्थसमुत्स्यन्दनस्थानात् परमात्मनः **ऊर्मिः** रश्मिसङ्घातात्मा आदित्यः **मधुमान्** ब्रह्मवान् तदाविर्भाव-स्थानत्वात् । वेदवान् वा तन्मयत्वात् । **उदारत्** उदगच्छत् । अथ स आदित्यः **उपांशुना** उपगच्छता अंशुना रश्म्यात्मना रूपेण । 'उपाद्व्यजजिनमगौरादयः' इत्युत्तरपदान्तोदात्तत्वम् । **अमृ-तत्वं** अमृतात्मा चन्द्रः तद्भावं **समानट्** समश्नुत चन्द्रत्वेन वर्तते । यथा—'तस्यैको रश्मिश्चन्द्रमसं प्रदीप्यते' इति । अश्नोतेर्व्यत्य-येन लङि परस्मैपदम् । यद्वा—नशेर्गतिकर्मणो लङि 'मन्त्रे घस' इति च्लेर्लुक् । 'छन्दस्यपि दृश्यते' इत्यडागमः । समुपाश्नुत इति संबन्धम[1]पवर्गस्यान्वये सर्वानुदात्तत्वं मृग्यम् । पुनश्च विशेष्यते—**घृतस्य** उदकस्य **गुह्यं** सूक्ष्मं **नाम** नमनं उत्पादकं **यदस्ति** तादृशं 'आदित्याज्जायते वृष्टिः' इति **जिह्वा** जिह्वास्थानीया यागद्वारेण सर्वान्नलाभहेतुत्वात् **अमृतस्य** अमृतत्वप्राप्तेः **नाभिः** नहनहेतुः **देवानाम्** ॥

[16]वयमिति ॥ तद्घृतमिदानीं स्तूयते परत्माम एव वैभवप्रदर्श-नार्थम् । **नाम** प्रसिद्धौ । **वयं** हि सर्वे **घृतेन** उदकेन **प्रब्र-वाम** ब्रुवाणाः भूयास्म जीव्यास्मेति यावत् । यद्वा—नामानि वेदशास्त्रपुराणानि पदानि प्रब्रवाम । किञ्च—**अस्मिन् यज्ञे** न-

[1]संबन्धेऽपि अ.

**नमोभिः। उप ब्रह्मा शृणवच्छस्यमानं चतुश्शृङ्गोऽवमीद्गौर एतत्। [17]चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य। त्रिधा बद्धो वृषभो रो-**

---

मोभिः अन्नैः देवानपि **धारयाम** वृतेन स्वकारणत्वात् अस्य। सांहितिकं आख्यातस्य दीर्घत्वं छान्दसम्। तत् **एतत्** महाप्रभावं वृतं **शस्यमानं** स्तूयमानं अस्माभिः **ब्रह्मा** वाक्पतिः **उप शृणवत्** उपेत्य शृणुयात्। लेटचाडागमः। अयमपरोऽस्य विशेषश्श्रूयतां—एतत् वृतं **चतुश्शृङ्गः** तच्चोदितत्वात् **गौरः** शुद्धः गौरमृगतुल्यः पावनो यज्ञः **अवमीत्** उद्गिरति उत्पादयति यज्ञफलत्वाद्वृष्टेः॥

[17]चत्वारीत्यादि॥ स यज्ञोऽधुना स्तूयते—**अस्य** यज्ञस्य **चत्वारि शृङ्गा** शृङ्गाणि प्रधानाः दीप्तिमन्तो वा ऋत्विजः अध्वर्युर्होता ब्रह्मा उद्गाता च शृङ्गस्थानीयत्वात् प्रधानावयवत्वात्, अस्य यज्ञस्य **त्रयः पादाः** गार्हपत्यादयः अग्नयः त्रयः यत्र यज्ञः प्रतिष्ठितः **द्वे** अस्य **शीर्षे** शिरसी शिरस्थानीयौ पत्नीयजमानौ प्रायणीयोदयनीयौ वा। **सप्त** छन्दांसि गायत्र्यादीनि **हस्तासः** हस्तस्थानीयानि प्रधान[प्रदान]साधनत्वात्। **त्रिधा** त्रिभिः प्रकारैः **बद्धः** बद्धशरीरः सवनत्रयात्मत्वात् तेषां च पृथक्स्वभावत्वात् **वृषभः** वर्षिता कामानां **रोरवीति** भृशं शब्दायते त्रिषु सवनेषु ऋग्भिर्यजुर्भिस्सामभिः प्रयुज्यमानैर्महान्तं शब्दं करोति। किं बहुना—**महो देवः** महान् देवः परा देवता **मर्त्यान्** मनुष्यानपि यज्ञद्वारेण **आविवेश** मनुष्याधिकारो वर्तते। रुत्वानुनासिकौ उभौ॥

रवीति म॒हो दे॒वो मर्त्याँ॑ आवि॑वेश । [18]त्रिधा॑हि॒तं प॒णिभि॑र्गु॒ह्यमा॑नं॒ गवि॑ दे॒वासो॑ घृ॒तमन्व॑विन्दन्न् । इन्द्र॒ एक॒ꣳ सूर्य॒ एकं॑ जजान वे॒नादेक॒ꣳ स्व॒धया॒ निष्ट॑तक्षुः । [19]यो दे॒वानां॑ प्र॒थमं॑ पु॒रस्ता॒द्विश्वा॒धिको॑ रु॒द्रो म॒हर्षिः॑ । हि॒र॒ण्य॒ग॒र्भं प॑श्यत॒ जाय॑मान॒ꣳ

---

[18]त्रिधा हितमिति ॥ त्रिधा त्रिप्रकारं घृतं हितं स्थापितं गवि शब्दब्रह्मणि मन्त्रे वा पणिभिः व्यवहर्तृभिः मन्त्रद्दग्भिः ऋषिभिः गुह्यमानं सम्प्रीयमाणं देवासः देवा अन्वविन्दन् अनुक्रमेणालभन्त उपलब्धवन्तः इन्द्रादयः । तदेव त्रैविध्यं दर्शयति—इन्द्रः पर्जन्यात्मा एकं जजान प्रकाशितवान् एकं स्वरूपं वृक्षलतादिषु रश्मिसंयोगेन परिणतं सूर्यो जनयति । छान्दसे लिटि 'बहुलं संज्ञाछन्दसोः' इति णिलुक् । अथ एकं स्वधया अमृतभावेन उपलक्षितं अन्नेन वा हविषा तत्परिणामात्मकं अमृतात्मकं वेनात् कान्तात् परमात्मनः वस्वादयो निष्टतक्षुः निष्कृष्य उत्पादितवन्तः ॥

[19]यो देवानामिति ॥ यो देवो विश्वाधिकः विश्वं अधिकारिवर्गं अतिक्रम्य स्थितः रुद्रः रोदयिता अन्तकाले विश्वस्य महर्षिः महाद्रष्टा सर्वार्थसाधनदृष्टिः देवानां प्रथमं आद्यं हिरण्यगर्भं पुत्रस्थानीयं जायमानं योनिस्थानीयादस्मात् परमात्मनः उत्पद्यमानं पुरस्तात् कल्पादौ पश्यत अपश्यत् दृष्टिविशेषेण दृष्टिसमर्थमकरोत् । स देवो नः अस्मान् तादृश्या शुभया अस्मदभिप्रेतसम्पादिन्या स्मृत्या अनुग्रहबुद्ध्या संयुनक्तु संयुक्तं

**स नो॑ दे॒वश्शु॒भया॒ स्मृत्या॒ संयु॑नक्तु । [20]यस्मा॒त्परं॒ नाप॑र॒मस्ति॒ किंचि॒द्यस्मा॒न्नाणी॑यो॒ न ज्यायो॑ऽस्ति॒ कश्चि॑त् । वृ॒क्ष इ॑व स्तब्धो॒ दि॒वि ति॑ष्ठ॒त्येक॒स्तेने॒दं पू॒र्णं पुरु॑षेण॒ सर्व॑म् ॥ २३ ॥ [21]न कर्म॑णा न प्र॒जया॒ धने॑न॒ त्यागे॑नैके अमृत॒त्वमा॑न॒शुः । परे॑ण॒ नाकं॒ नि-**

---

करोतु । यद्वा—शुभया स्मृत्या विज्ञानेन अस्मान् संयोजयतु । एवं देवस्य अनुग्राहकत्वम् ॥

[20]यस्मात्परमिति ॥ **यस्मात्परं** इममतीत्य स्थितं किञ्चिदपि नास्ति **यस्मात्** च **अपरं** अधस्तात् स्थितं नास्ति किञ्चिदपि **यस्मात् अणीयः** सूक्ष्मतरं नास्ति यस्माच्च **ज्यायः** प्रवृद्धतरं स्थूलतरं **नास्ति किञ्चित्** । लिङ्गव्यत्ययः । यद्वा—यस्मान्ना णीयो न ज्यायोऽस्ति किञ्चिदित्येव । ततः कश्चित् **वृक्ष इव स्तब्धः** निश्चलः वृत्वा क्ष्मां सीदतीति वृक्षः क्ष्मामतिक्रम्य **दिवि तिष्ठति** दिवि द्योतनशीले परमात्मनि अपृथग्भावेन तिष्ठति **एकः** साधारणः सर्वोपजीव्यः **तेन** पुरुषेण पूरणेन व्यापकेन **इदं सर्वं पूर्णं** व्याप्तं परमात्मना ॥

[21]एवं देवानुग्राह्यतद्विभूत्युपवर्णनं प्रकरणार्थमुपसंहृत्य तत्प्राप्त्यु-पायमाह—न कर्मणेति ॥ **कर्मणा** अग्निहोत्रादिना 'कर्मणाऽऽनन्त्यमश्नुते' इति तेन फलाभिसन्धिकृतेन नित्यकर्ममात्रेण **एके** केचित् **अमृतत्वं नानशुः** नाश्नुवते पुमांसः । तथा **प्रजया** पुत्रपौत्रादिकया यथा—

**पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते ॥**

हि॒तं गुहा॑यां वि॒भ्राज॑ते॒ यद्यत॑यो वि॒शन्ति॑ । [22]वे॒दा-

---

इति । तथाऽप्यमृतत्वं नाश्नुवते । तथा धनेन पात्रेभ्यो दत्तेन अमृतत्वं नाश्नुवत इति । किंतु कर्मणां त्यागेन फलत्यागेनैव केचिदमृतत्वमानशुः अश्नुवते परज्ञानवन्तः । ते तस्मिन् सर्वकर्मफलानि न्यस्यन्ति, स्वयं च तैर्न लिप्यन्ते ।

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥

इति स्मृतिः । 'मयि कर्माणि संन्यस्य' इति च । श्रुतिश्च—
'श्रोत्रियस्य चाकामहतस्य'* इति । उवाच भगवान्—
न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥

न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥

इति च । किंच—कर्मत्यागवादिनां शरीरधारणादिकर्मकारिणां मुक्तिर्न स्यात् त्यागाभावात् । ऋणश्रुत्यैव नित्यानि कर्माणि न त्याज्यानि । तस्मात् फलत्यागिनोऽमृतत्वमश्नुवते । अर्चिरादिना मार्गेण अग्न्यहश्शुक्लपक्षमासोत्तरायणसंवत्सरदेवलोकवाय्वा[1]दित्यविद्युद्वरुणेन्द्रप्रजापतिक्रमेण गत्वा ब्रह्मीभूय तिष्ठति; न पुनरावर्तते । तस्मादाह—परेणेति । नाकं सुखैकरूपं ब्रह्मलोकं **परेण** तस्योपरि स्थितं यत् **विभ्राजते** । किञ्च—**गुहायां निहितं** स्थापितम् । कर्मणि निष्ठायां 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् ।

---

*उ. २-८. [1]वस्वा.

**न्तविज्ञानसुनिश्चितार्थास्संन्यासयोगाद्यतयश्शुद्धस-त्त्वाः । ते ब्रह्मलोके तु परान्तकाले परामृ-**

---

गुहा हृदयावकाशः । तत्र निहितं धात्रा जगदनुग्रहाय । तदेव योगवतां हृदि विभ्राजते 'स यश्चायं पुरुषे । यश्चासावादित्ये'[1] इति न्यायेन पञ्चकोशातिक्रमेण तदोकोऽग्र्ज्वलन[2]न्यायेन शताधिकनाडीसम्पन्ने स्थाने यत् विभ्राजते विविधं दीप्यते आविर्भूतैकोदयस्वभावं[3] निरुपमानं महाप्रकाशानन्दं यत् विभ्राजते तत् **विशन्ति** प्राप्नुवन्ति **यतयः** तदर्थं यतमानाः अधीतवेदा अधिगतसाङ्गवेदार्थपारमार्थ्यानुष्ठितयथोदितकर्माणो जितेन्द्रियाः प्रणिधानपराः तत् विशन्ति तामवस्थां प्रपद्यन्ते यां प्राप्य न शक्यं निवर्तयितुम् । ईदृगवस्थितं अमृतत्वं पुंसां आविर्भूतब्रह्मज्योतिषां परं ब्रह्म प्रसीदतीति ॥

22इदानीममुमेवामृतत्वप्राप्तिहेतुकर्मनिश्चयमेव[4] दर्शयति—वेदान्तेति ॥ शारीरकमीमांसाशास्त्रोक्तन्यायकलापसचिवमनीषामहिमनिरूपितानां वेदान्तवाक्यानां यत् विज्ञानं तदर्थगतं विलक्षणं ज्ञानं अभिधानतः तात्पर्यतश्च ज्ञानान्तरविलक्षणं वा यत् ज्ञानं यत्रायमधिकारोऽवतरति 'आत्मा वा अरे द्रष्टव्यः' इत्यादि । तेन वेदान्तविज्ञानेन **सुनिश्चितार्थाः** सुष्ठु निरूपितपरतत्त्वपारमार्थ्याः **संन्यासयोगात्** संन्यासेन योगेन च हेतुना । समाहारद्वन्द्वात् हेतौ पञ्चमी । ल्यब्लोपे वा कर्मणि—संन्यासयोगं प्राप्य कर्मफलानामीश्वरे समर्पणं संन्यासः । ब्रह्महुताशने आत्महविःप्रक्षेपलक्षणः समाधिसंज्ञो योगः । ताभ्यां **शुद्धसत्त्वाः** निर्मला-

---

1 उ. ३-८. 2 ज्वलनादि. 3 ...तैकोसरसं. 4 ..कर्मस्वयमेव.

**तात्परिं मुच्यन्ति सर्वे । [23]दहं विपाप्मं परवेश्म-**

---

त्मप्रकाशाः **यतयः** एवं यतमानाः **ते सर्वेऽपि ब्रह्मलोके** शुद्धसत्त्वतया ब्रह्मणः परमात्मनः लोके अवकाशे अवस्थिताः तस्य वा दर्शने सति । तुशब्दश्चावस्थाया विशेषत्वमाचष्टे । **परान्तकाले** परस्मिन्नन्तकाले पश्चिमजन्मसमाप्तिकाले **परामृतात्** अपुनरावृत्तिकारणात् तादृशकर्मकरणं[1] प्राप्य । ल्यब्लोपे पञ्चमी । **परिमुच्यन्ति** सर्वतो मुच्यन्ते जीवन्मुक्ता एव हि ते इदानीं विगलितसर्वसांसारिकस्वभावास्स्वरूपेणावतिष्ठन्ते सर्वेऽप्याश्रमिणः सर्वेऽपि वर्णिनः । यथा—

> **भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।**
> **क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥**

इति । केचिदाहुः—ते ब्रह्मलोके प्राजापत्यस्थाने यावदधिकारं तेन सह स्थिताः परान्तकाले महार्थोपसंहारकाले सर्वे युगपत् मुच्यन्त इति परमात्मतत्त्वदृष्टिरमृतत्त्वहेतुः इति ॥

[23]अधुना किं एनामवस्थां प्राप्तानां आविर्भूतात्मज्योतिषां कर्तव्यमन्यन्नास्त्येवेत्याह—दह्रमिति । यद्वा—यदुक्तं अनुवाकादौ 'धातुः प्रसादान्महिमानमीशं तमक्रतुं पश्यति'* इति तत्प्रसादनं कथं भवतीत्याह—दह्रमिति ॥ **दहं** अल्पप्रमाणं **विपाप्मं** विगतपापं सर्वदुःखरहितं **परवेश्मभूतं** परवेश्म राजभवनादि तद्भावमापन्नं उपासकानुग्रहाय निर्मितं अनवद्यं वेश्म **पुण्डरीकं** पुण्डरीकसदृशं पुण्डरीकाख्यं वा हृदयम् । यद्वा—पुण्या भूता दरी गुहा पुण्डरी तां कायति शब्दायतीति पुण्डरीकं तत्तुल्यमिति यावत् ।

---

[1]तादृशमरणं. *आ. ६-१०.[1]

**भूतं यत्पुण्डरीकं पुरमध्यसꣳस्थम् । तत्रापि दह्रं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम् ।[24] यद्वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः । त-**

---

पुण्यकर्माणि शुभे । 'ष्टुना ष्टुः' इति ष्टुत्वम् । पुंसां वा दरी पुण्डरीकं पृषोदरादिः । यत् ईदृशं स्थानं पुरमध्यसंस्थं शरीरमध्ये सम्यक् स्थितं नगरमध्यस्थितानवद्यराजभवनस्थानीयं तत्रापि तथा दह्रेऽपि तस्मिन् स्थाने ततोऽपि दह्रं तदन्तर्गतत्वात् गगनं गगनसंज्ञं परमं व्योम गमनीयं वा सर्वैः । कः पुनस्सोऽर्थ इत्याह—विशोकः परमात्मेति यावत् यत्र प्रविष्टानां शोको नास्ति । आख्यातत्वात्पुल्लिङ्गता । उपासकानुग्रहाय सङ्कुचितात्मा यस्तत्र स्थितः तस्मिन् अन्तः मध्ये यस्तु स्थितः परं ब्रह्म विश्वोत्तीर्णं तदुपासितव्यं ध्यातव्यं श्रेयोऽर्थिभिः । यथा—'परमात्मनि संप्रतिष्ठाप्य ध्यायीतेति शासनम्' । इति ततः तत्प्रसादात् परमव्योमप्रदेशं प्राप्यामृतो भवतीति पुरस्थानीये शरीरे राजस्थानीयं यत् पुण्डरीकाख्यं आश्चर्यं तत्स्थानं तत्रापि मध्ये सुगुप्तापवरकस्थानीयं समस्तशोकरहितं यत् गगनाख्यं स्थानं तदन्तर्वर्तिराजस्थानीयं विभूतित्वं परं ब्रह्म उपासितव्यम् । ततः तत् प्रसन्नं स्वां विभूतिमस्मै[1] प्रदर्शयति तां दृष्ट्वाऽमृतो भवतीति । तदुक्तम्—'तस्मिन् यदन्तस्तदुपासितव्यम्'* इति ॥

[24]तत्र क उपास्यः कीदृशो वा अयमित्याह—यद्वेदादावित्यनुष्टुप् ॥ यत् अक्षरं प्रणवात्मकं[2] सर्वशब्दपरिणामाविभागावस्थं विश्वव्यापकं वेदादौ तत्परिणामात् प्राक् स्वरः प्रोक्तः नादात्मा[3]

---

[1]स्वानुभूतिं. [2]परमात्मसंज्ञकं. [3]नादात्मनः. *छान्दो. ८-१.

स्यं प्रकृतिलीनस्य यः परस्स महेश्वरः ॥ २४ ॥

अजोऽन्यस्सुव नाभिस्सवैमष्टौ च ॥ १० ॥

[1]सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवम् ।

प्रथमत उक्तः । मध्ये स एव वेदात्मना परिणतः सर्वश्रेयोहेतुः अथ वेदान्ते वेदानामवसानेऽपि **प्रतिष्ठितः** स्वरूपेणा[1]वस्थितः विश्वोपसंहारकालेऽपि प्रणवात्मना वेदाः तिष्ठन्तीति **तस्य** तादृशमहानुभावस्य वेदगर्भस्य प्रणवब्रह्मणः **प्रकृतिलीनस्य** प्रकृतौ परमप्रकृतौ परव्योमनि लीनस्य अविभागेन अवस्थितस्य ज्ञानक्रियाशक्त्यानन्दानामविभागावस्थानरूपत्वेन प्रणवब्रह्मगर्भत्वात् परप्रकृतेः तस्य व्यापक[2]समष्ट्यात्मनः प्रणवस्य **यः परः** प्रधानप्रतिपाद्यः यत्रास्य पारतन्त्र्यं 'यत्परश्शब्दस्स शब्दार्थः' इति सोऽर्थ उपास्य इति । यद्वा—तस्य प्रणवस्य **प्रकृत्या**[3] तिसृभिर्मात्राभिः लीनस्य व्याप्य स्थितस्य यः परः अर्धमात्राकालः **स** प्रतिपाद्योऽर्थः उपास्यः कीदृशः? **महेश्वरः** अत एव उपास्यः पूजनार्थं महत्त्वविशेषणं नाल्पेश्वरत्वनिवृत्त्यर्थं, पदश्रुत्यैव निरतिशयैश्वर्यवति तस्य वृत्तेः । 'सन्महत्' इत्यादिना समासः ॥

इति याज्ञिकोपूपनिषत्सु दशमोऽनुवाकः.

---

[1]सहस्रशीर्षमित्याद्याः पञ्चानुष्टुभः ॥ तत एका द्विपदा । शिष्टं ब्राह्मणमानुष्टुभम् । अन्ते एका द्विपदा । अत्रापि परमात्मा स्तू-

[1]स्वरूपेण नादरूपेण. [2]कस्य वाचक. [3]प्रकृतौ प्रपञ्चवाद्यं.

**विश्वं नारायणं देवमक्षरं परमं प्रभुम् । [2]विश्वतः परमं नित्यं विश्वं नारायणꣳ हरिम् । विश्वमेवेदं**

---

यते—**सहस्रशीर्षं** बहुशिरस्कं सर्वत्र शिरःकार्यसम्भवात् बहुप्रकारशिरस्कत्वात् तादृशं **देवं** 'विश्वमुपजीवति'* इति वक्ष्यमाणेनान्वीयते । तस्मात् तमेव स्तुम इति शेषः । **विश्वाक्षं** विश्वत्राक्षिकार्यवन्तम् । विश्वानि अक्षीणि प्रजासम्बन्धीनि इन्द्रियाणि अस्य अक्षीणि इन्द्रियाणि ॥

वर्णान्यत्वं स्वरान्यत्वं पञ्चप्रश्नेषु दृश्यते ।

इति स्वरव्यत्ययस्सर्वत्र द्रष्टव्यः । **विश्वशंभुवं** विश्वस्य शं सुखं तस्य भावयितारं सर्वांशेऽप्यस्य आनन्दरूपत्वात् तादृशम् । **विश्वं** विश्वत्वेन स्थितं **नारायणम्** । 'नॄ नये' पचाद्यच् । नरः नेता सर्वस्य स्वामी तस्य स्वभूताः पशवो नाराः तेषां अयनं उपादानं नारायणम् । 'पूर्वपदात्संज्ञायामगः' इति णत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वेन लित्स्वरः । **देवं** देवनशीलं द्योतमानं, सदा **अक्षरं परमं** परमव्यापकम् । अशेस्सरन्प्रत्यये अक्षरम् । **प्रभुं** प्रथमतस्सम्भूतं सर्वप्रपञ्चभरणक्षमं वा ॥

[2]विश्वत इत्यादि ॥ **विश्वतः** प्रजापत्यादेरपि **परमं** प्रकृष्ट **नित्यं** ध्रुवं[1] **विश्वं** प्रपञ्चरूपमतीत्य स्थितं अव्यक्तावस्थं ध्रुवं देवमिति **नारायणं** नराणां गन्तव्यम् । 'अनो भावकर्मवचने' इत्युत्तरपदान्तोदात्तत्वम् । **हरिं** ह्रियते उपसंह्रियतेऽस्मिन् विश्वमिति अधिकरणे इन्प्रत्ययः । **इदं विश्वं पुरुष एव** पूरयिता

---

[1]ध्रुवं ध्रुवे विश्ववन्तम् । मत्वर्थीय इकारः । प्रत्ययान्तत्वादन्तोदात्तत्वम्.

*आ. ६-११.२

**पुरुषस्तद्विश्वमुपजीवति । [3]पतिं विश्वस्यात्मेश्वरꣳ शाश्वतꣳ शिवमच्युतम् । नारायणं महाज्ञेयं विश्वात्मानं परायणम् । [4]नारायणपरं ब्रह्म तत्त्वं नारायणः परः । नारायणपरो ज्योतिरात्मा नाराय-**

---

पुरुषः तत् तस्मात् विश्वं जगत् पुरुषं उपजीवति आत्मानं लभते तत्परिणामत्वाद्विश्वस्य ॥

[3]पतिमित्यादि ॥ पतिं पातारं विश्वस्य । पातेर्डतिः । आत्मेश्वरं क्षेत्रज्ञानामीश्वरं तद्भरणक्षमं तत्परिणामत्वात् तेषाम् । शाश्वतं अविनाशं शिवं शान्तोपद्रवं क्षतिरहितं नारायणं नारा एव अयनं आश्रयो यस्य 'तत्सृष्ट्वा । तदेवानुप्राविशत्'* इति तद्रूपेणैव विज्ञेयं महाज्ञेयं सर्वज्ञेयसमष्टिभूतम् । यद्वा—प्रशस्तं ज्ञेयं अपवर्गहेतुत्वात् । विश्वात्मानं विश्वमेव आत्मा शरीरं यस्य परायणं प्रकृष्टं गन्तव्यम्[1] तादृशं विश्वमुपजीवतीति ॥

[4]नारायणपरमिति ॥ नारायणपरतन्त्रं ब्रह्मपरं[2] तद्भावापेक्षितत्वात् प्रपञ्चसृष्टेः । तत् कथमित्याह—तत्त्वं पृथिव्यन्तं सर्वं तत्त्वजातं नारायणः परः परतत्त्वात्मा नारायण एव तत्परिणामत्वात् जगतः । तस्मात् मृत्परतन्त्रः कुलाल इव नारायणपरं ब्रह्मेति। एवमचिदुपादानत्वं परमात्मन उक्तम् । इदानीं चेतनानामप्ययमेवोपादानमिति दर्शयति—नारायणपरतन्त्रः ज्योतिः द्योतमानः प्रकाशस्वभाव आत्मा विज्ञानात्मा तद्विस्फुलिङ्गत्वात् क्षेत्रज्ञानाम् । तस्मात् तत्परतन्त्राः आत्मानः तद्भावे भावात् मृत्परतन्त्रा इव घटा-

---

[1]गन्तव्यं अमस्तक्रां. *आ. ५-१४-३१. [2]ब्रह्मरूपं.

**णः परः । [5]यच्च किञ्चिज्जगत्यस्मिन्दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थितः ॥ २५ ॥ [6]अनन्तमव्ययं कविꣳ समुद्रेऽन्तं विश्वशम्भुवम् । [7]पद्मकोशप्रतीकाशꣳ हृद-**

दयः । कथमित्याह—नारायणः परः नारायणो हि परमश्चेतनः सर्वचेतनानां[1] समष्टिः ॥

[5]एवं चितामप्ययमेवोपादानमिति स्थितम् । यस्मादेवं तस्मात्—यच्चेति ॥ यच्च किञ्चित् यत्किञ्चिदपि पदार्थजातं चेतनमचेतनं वा **अस्मिन् जगति**, परिणते प्रपञ्चे दृश्यते वा श्रूयते वा **अन्तर्बहिश्च** अन्तस्स्थितं वा बुद्ध्यादि बहिस्स्थितं वा घटादि **तत्सर्वं व्याप्य स्थितो नारायणः** ॥

[6]अनन्तमिति ॥ इयं द्विपदा गायत्री ॥ **अनन्तं** अपरिच्छिन्नं **अव्ययं** न व्येतीत्यव्ययं व्ययरहितं **कविं** मेधाविनं **समुद्रे** समुद्भवन्त्यस्मादिन्द्रियाणीति समुद्रो हृदयावकाशः[2] तत्र स्थितं **अन्तं** समस्ताध्वसमाप्तिस्थानं **विश्वशंभुवं** व्याख्यातम्* । ईदृशमिमं देवं विश्वमुपजीवतीति ॥

[7]अतःपरं ब्राह्मणं—'दह्रं विपाप्मं'† इत्यादि यदुक्तं तस्य शेषः—पद्मकोशेत्यादि ॥ **पद्मकोशप्रतीकाशं** पद्ममुकुळसङ्काशं स्थानं पद्मकोशवत् प्रकाशते **हृदयं** हृदयकोशं आश्रयापेक्षया समुच्चयार्थश्चशब्दः । 'दह्रं विपाप्मं'† इत्यत्र यत् स्वरूपेण प्रतिज्ञातं उपासनस्थानं उपासितव्यं च तत्र उपासितव्यं वर्णि-

[1]सर्वदेवतानां. [2]हृदयाकाशः. हृदयकोशः *आ. ६-११.[1] †आ. ६-१०.[23]

**यं चाप्यधोमुखम् । अधो निष्ट्या वितस्त्यां तु नाभ्यामुपरि तिष्ठति । हृदयं तद्विजानीयाद्विश्वस्यायतनं महत् । [8]सन्ततꣳ सिराभिस्तु लम्बत्याकोशसन्निभम् । तस्यान्ते सुषिरꣳ सूक्ष्मं तस्मिं-**

---

तमिति अनन्तरमुपासनास्थानं हृदयं च वर्णयाम इत्यर्थः । अपि च—इदं स्थानं **अधोमुखं** अवाङ्मुखं व्यवहारकाले तन्निवृत्तावूर्ध्वमुखं विकसति । अथ कुत्रेदं स्थानमित्याह—**अधः** अधस्तात् **निष्ट्याः** निष्ट्यायाः निष्ट्यानाम स्थानं ध्वनेः ग्रीवाबन्धनम् । स्त्यायतेर्निपूर्वात् 'आतश्चोपसर्गे' इत्यङ् । 'सुपां सुलुक्' इत्याकारः । अधस्तात् कियति प्रदेश इत्याह—**वितस्त्यां तु** वितस्तिप्रमाणपरिमिते वितस्तिः मध्यमाङ्गुल्या[1] विशेषः । स च पूर्वोक्तस्य स्थानस्यायमपि विशेषः यत् निष्ट्याया अधस्तात् वितस्त्यन्ते तिष्ठतीति । **नाभ्यामुपरीति** नाभ्या उपरि वितस्त्यां त्वित्येव । विभक्तिव्यत्ययः । नाभ्यां वा स्थित्वा ऊर्ध्वं मीयमाने वितस्त्यां तिष्ठतीति तत्स्थानमिति **हृदयं तत्** इति तत् एतद्धृदयं **विश्वस्यायतनं** स्थानं **विजानीयात् महत्** असङ्कुचितं विश्वस्यासङ्कुचितवासस्थानं विजानीयात् विश्वात्मनः परमात्मनस्स्थानत्वात् ॥

[8]पुनश्च विशिनष्टि—**सन्ततं** समन्ताद्विधृतं **सिराभिः लम्बति** प्रलम्बते । **तुशब्दः** पूर्ववद्विशेषे । **आकोशसन्निभं** ईषत्कोशसदृशं लम्बते विश्वस्यायतनं विजानीयात् । तस्यान्त इति

---

[1]ङ्गुल्यास्तु.

**न्थ्सर्वं प्रतिष्ठितम् । [9]तस्य मध्ये महानग्निर्विश्वार्चिर्विश्वतोमुखः । सोऽग्रभुग्विभजन्तिष्ठन्नाहारमजरः कविः । संतापयति स्वं देहमापादतलमस्तकम् । [10]तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थितः । नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा।**

---

**तस्य** पद्मकोशस्य अन्ते मध्ये **सुषिरं** छिद्रं **सूक्ष्मं** स्वल्पप्रमाणं विद्यते हृदयाकाशाख्यं तस्मिन् सुषिरे **सर्वं** जीवात्मप्रभृति चेतयमानपदार्थजातं **प्रतिष्ठितं** निश्चलं तिष्ठति ॥

[9]**तस्य** सुषिरस्य **मध्ये महानग्निः** ज्वलति वैश्वानरः **विश्वार्चिः** विश्वतः प्रसरज्ज्वालः **विश्वतोमुखः** विश्वावकाशोदीर्णमुखसामर्थ्यः । **सोऽग्रभुक्** सोऽग्निः स्वं आश्रयं **देहं सन्तापयति** उष्णं करोति । भुक्तस्य जरयितेत्यभिप्रायः । **कविः** क्रान्तदर्शनः ॥

[10]तस्य मध्ये इति ॥ **तस्य** अग्नेः **मध्ये वह्निशिखासदृशो** जीवो **व्यवस्थितः** । यद्वा—वह्निशिखा जीवप्रभा वहतीति वह्निः जीवः सा **व्यवस्थितः** । लिङ्गव्यत्ययः । कीदृशो जीवः—**अणीयोऽर्ध्वा** । रेफोपजनश्छान्दसः । अणीयः अध्वा मार्गो यस्य तादृशः अणुतरस्वभाव इति भावः । यद्वा—कीदृशी वह्निशिखेत्याह । अणीयोर्ध्वा अणीयसामूर्ध्वभूता नातः परमणीयोऽस्ति । यलोपमाश्रित्य गुणः क्रियते । पुनश्च वह्निर्विशेष्यते—**नीलतोयदमध्यस्था** सजलजलदमध्यवर्तिनी **विद्युल्लेखा** परभागलाभेन यथा **भास्वरा** दीप्ततरा भवति तादृशी इयं वह्निशि-

[11]नीवारशूकवत्तन्वी पीताभा स्यात्तनूपमा । तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः । [12]स ब्र-

---

ख्या भवति । व्यवहारकाले निमीलितपरतत्त्वानां प्रपञ्चोन्मीलनेन महामोहतमोमध्यवर्तिनी जीवप्रभा अतीव संकुचिता मलिनेव भवति । व्यवहारनिवृत्तौ उन्मीलितपरतत्त्वानां प्रपञ्चनिमीलनेन महामोहनिवृत्तौ अनवच्छिन्ननिर्मलात्मभावोपपत्तिर्भवतीति ॥

[11]**नीवारेत्यादि** ॥ **नीवारशूकवत्तन्वी** तनुप्रमाणा **पीताभा** पीतवर्णा तप्तकाञ्चनदीप्तिः । किञ्च—**स्यात्** **तनूपमा** स्यादियं तनूनामुपमा तनूनि वस्तूनि अनया उपमीयन्ते परमतनुत्वात् अस्याः । यथा—

**वालाग्रशतभागस्य शतधा कल्पितस्य च ।**
**भागो जीवस्स विज्ञेयः स चानन्त्याय कल्पते ॥**

इति । **तस्याः** तादृश्याः वह्निशिखायाः **मध्ये** **परमात्मा** आत्मप्रकृतिभूतो नारायणो **व्यवस्थितः**, जीवानुरोधेन संकुचितस्तिष्ठति ॥

[12]**स ब्रह्मेति** द्विपदा ॥ स एव **ब्रह्मा** स एव स्रष्टा स एव **शिवः** रुद्रः **स** एव **इन्द्रः** देवराजः स एव **अक्षरः** क्षरणरहितः **परमः** प्रकृष्टः **स्वराट्** स्वे महिम्नि सदा राजमानः स्वतन्त्रो देवः सर्वस्य हेतुरीश्वरः । सर्वोपलब्धिस्थानत्वात् **अस्य** परमात्मप्रदेशस्य तद्भावेनास्य स्तुतिः । एवमीदृग्गुणं परमात्मलक्षणं ब्रह्म विदित्वा स-

ह्मा स शिवस्सेन्द्रस्सोऽक्षरः परमस्स्वराट् ॥२६॥

नारायणस्स्थितो व्यवस्थितश्चत्वारि च ॥११॥

ऋतꣳ सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ।

---

वमेव मन्त्रब्राह्मणाविहितद्रव्यदेवताकर्मजातमत्रैव परमात्मनि उपसंहृत्य मनस्संप्रतिष्ठाप्य उपासनां कुर्वन् परं ब्रह्म आप्नोति ॥

इति याज्ञिक्युपनिषदि एकादशोऽनुवाकः.

---

[1]कीदृशं पुनस्तत्प्राप्यं ब्रह्मेत्याह—**ऋतमिति** अनुष्टुप् ॥ मानसं तथ्यं **ऋतम्** । वाचिकं **सत्यम्** । उभयविपर्यासरहितम् । यद्वा—ऋतमिति सौत्रो धातुः घृणायां वर्तते । ऋतीयते विश्वमनुगृह्णाति इत्यृतं शिवैकस्वरूपम् । इगुपधलक्षणः कः । "आयादय आर्धधातुके वा" इति ऋतेरियङ् क्रियते । सति साधु सत्यम् । सते वा हितम् । स्यामिति व्यामिश्रकं[1] संकल्पप्रभवं परस्य रूपं सत् । तेन विश्वमनुगृह्णातीति । तादृशं **परं** सर्वस्मादुत्कृष्टं विश्वोत्तीर्णं **ब्रह्म** परिवृढं वस्तु **पुरुषं** पूरकं पालकं वा सर्वस्य चेतयमानं वा **कृष्णपिङ्गलं** देहपरिजिघृक्षायां स्त्रीपुंसशबलाकारं परशक्त्यविनाभूतं वा । केचिदाहुः—कृष विलेखने । कर्षणीया योनिः कृष्णा । पिजि हिंसादौ । पिञ्जनशीलं पिङ्गलं तदुभयभावेन जगद्वृद्धिक्षयं कुर्वाणम् । ऊर्ध्वरेतं स्वयं तु सर्वदा संदीप्ततपस्कम् ।

---

[1]व्यामिश्रकं इति क्वचिन्न दृश्यते.

**ऊ॒र्ध्वरे॑तं॒ विरू॑पा॒क्षं॒ वि॒श्वरू॑पा॒य॒ वै नमः॑ ॥२७॥१२॥**

**[1]आ॒दि॒त्यो वा ए॒ष ए॒तन्म॒ण्ड॒लं॒ तप॑ति॒ तत्र॒ ता ऋ॒चस्तदृ॒चां म॒ण्ड॒ल॒ꣳ॒ स ऋ॒चां लो॒कोऽथ॒ य ए॒ष**

---

यद्वा—रेतोभ्यो विकारेभ्यः ऊर्ध्ववर्ति विश्वविकारोत्तीर्णम् । छान्दसस्सकारलोपः । **विरूपाक्षं** विलक्षण[1]लोचनं ईदृशं परं ब्रह्म भवति । तस्मै **विश्वरूपाय नमः** विश्वत्वेन स्थितं तदेव रूपं रूपणस्थानं यस्य जगदनुग्रहार्थं विश्वरूपतां च दधते तस्मै नमः । प्रह्वीभावं कुर्मः । **वै**शब्दः सांप्रतिकार्थः—इदं हि युक्तमिति । "तस्मै नमः" इति दर्शनात् प्रजापशुविद्याविभूतिकामानां अपवर्गार्थिनां च जपोपासनहोमादिषु अयं विनियुज्यते ॥

इति याज्ञिक्युपनिषदि द्वादशोऽनुवाकः.

---

[1]पुनरपि जगदनुग्रहार्थं प्रकारा देवस्योच्यन्ते—**आदित्यो वा इत्यादि** । **एष** इति दृश्यमानं तपनं प्रत्यक्षेण दर्शयति । आदिभूतो[2] देव **आदित्यः** ईश्वरः स एव **स्वयं** य एष तपनः तदीयं तेजो जगदनुग्रहाय सूर्यत्वेन वर्तत इति । तदेवाह—**एतत् मण्डलं तपति** तत्र परस्मिन् देशेऽवस्थितम् । आत्मनो वा निमित्ते सति एतत् दृश्यमानं मण्डलं तेजस्सङ्घातः तपति । प्रकाशादिना जगदनुगृह्णाति तदीयं तेज इति यावत् । यथा "तत्सवितुर्वरेण्यं भर्गः"* इति । **ता ऋच इति** । तादृक् तपनशक्ति-

---

[1]विषम. *सं. १-५-६. [2]आदिभूतत्वेन.

एतस्मिन्मण्डलेऽर्चिर्दीप्यते तानि सामानि स साम्नां मण्डलꣳ स साम्नां लोकोऽथ य एष एतस्मिन्मण्डलेऽर्चिषि पुरुषस्तानि यजूꣳषि स यजुषां मण्डलꣳ स यजुषां लोक[2]स्सैषा त्रय्येवं विद्या

---

युक्तमण्डलं **ऋचः** ऋचां प्रभावः । ऋगपेक्षया स्त्रीत्वं बहुत्वं च । तस्मात् **तदृचां** एव मण्डलं सङ्घातः । तस्मादेव **स ऋचां लोकः** स्थानं तत्रैव ऋचो लोक्यन्ते । अथ **एतस्मिन्मण्डले योऽर्चिः** ज्वाला **दीप्यते** प्रकाशते **तानि सामानि** साम्नां महिमा । तस्मात् तदेव **साम्नां** स्थानम् । अथ **एतस्मिन् मण्डले** आधारे **अर्चिषि पुरुषः** तदभिमानी मण्डलक्षेत्रज्ञः **तानि यजूंषि** यजुषां प्रभावपरिणामः । तस्मात् सः यजुस्सङ्घातात्मा **यजुषां स्थानम्** ॥

**सैषेत्यादि** ॥ यान्येतानि मण्डलमर्चिः पुरुष इति तान्येतानि **त्रय्येव विद्या तपति** मण्डलादिरूपेण त्रय्येव तपति । विद्याग्रहणं वेदप्राधान्यख्यापनार्थम् । यद्विद्या तपति वेद्यमेव तत्तपति । तदेवाह—**य एष** इति । सोऽयं **अन्तरादित्ये** रसानामादातरि मण्डले उपास्यत्वेन श्रूयमाणो **हिरण्मयो** हिरण्यवर्णः हितरमणीयो वा **पुरुषः** ईश्वरः त्रयीवेद्यः **स** एव मण्डलार्चिःपुरुषभावमापन्नः ऋक्सामयजुर्लक्षणविद्यारूपेण तपति । तस्मात् तमेवोपास्महे इति शेषः । यद्वा—योऽन्तरादित्ये हिरण्मयः पुरुषः स एव एवं त्रयी भूत्वा तपति । कीदृशी त्रयी विद्येत्याह—**एषा** । एत-

तंपति य एषोऽन्तरादित्ये हिरण्मयः पुरुषः॥२८॥
॥ १३ ॥

[1]आदित्यो वै तेज ओजो बलं यशश्चक्षुश्श्रोत्र-मात्मा मनो मन्युर्मनुर्मृत्युस्सत्यो मित्रो वायुरा-काशः प्राणो लोकपालः कः किं कं तत्सत्यम-

---

न्मण्डलादित्रितयात्मिकेत्यर्थः ॥

इति याज्ञिक्युपनिषदि त्रयोदशोऽनुवाकः.

---

[1]आदित्यो वै तेज इति ॥ यदुक्तं त्रयी भूत्वा जगदनुगृह्णातीति अल्पेयं मात्रेत्याह—तेजआदिसंवत्सरपर्यन्यः पदार्थवर्गः य एवमादिभूतो देवः तत्तद्भावेनानुगृह्णाति तत्तदार्थिना स एवं ज्ञात्वोपासितव्य इति भावः । तेजो भूत्वा तेजयति[1] । एवं सर्वत्र । देवताविशेषा एते तत्तदभिमानिनः । तेजो दीप्तिः । ओजः रूपशोभा । उब्जेरोजः । बलयतीति बलम् । बल प्राणने । यजतेः यशः पूजनात् । चक्षुः दर्शनात् । श्रोत्रं श्रवणात् । आत्मा अतनात् । मनः मननात् सङ्कल्पात् । मन्युः क्रोधः अभिमननात्[2] । मनुः मननात् ज्ञानात् । मृत्युः मरणात् । सत्यः सति साधुः साक्षी देवताविशेषः । मित्रो मित्रं प्रमितेस्त्राणात् । देवताविशेष एव । वायुः वानात् प्रेरणात् ।

---

[1]तेज इति. [2]अभिमाननात्.

**अन्नमायुरमृतो जीवो विश्वः कतमस्स्वयंभु प्रजापतिस्संवथ्सर इति [2]संवथ्सरोऽसावादित्यो य एष**

आकाशः आकाशनात् अवकाशप्रदानात् । **प्राणः** प्राणनात् उच्छ्वासादिकात्[1] । **लोकपालः** इन्द्रादिः लोकानां पालनात् । **कः** प्रजापतिः कायनात् । नित्याव्यक्तं कायतेः **किं** नित्यं शब्द्यत एव । **कं** सुखं कमनीयत्वात् । **तत्** व्यापकं परोक्षं वा तनोतीति **तत्** । **सत्यं** सच्च त्यच्च मर्त्यामर्तम् । समाहारद्वन्द्वः । **अन्नं** अदनीयम् । **आयुः** अयनात् जीवद्दशया[2] । **अमृतः** अमृतत्वनिमित्तम् । **जीवो** जीवात्मा जीवनात् ; जीवननिमित्तं वा । **विश्वः** विश्वात्मा सर्वत्र प्रवेशात् । **कतमः** अशक्यनिर्धारणः सर्वगतत्वात् परमात्मा । **स्वयंभु** स्वयमेव भवनात् परंब्रह्म । **प्रजापतिः** प्रजानां पाता स्वामी ब्रह्म । **संवत्सरः** सम्यक् वसन्त्यनेनेति विश्वोपादानं ब्रह्म । इतिशब्दोऽनुक्तरूपपरिग्रहार्थः ॥

[2]संवत्सर इत्यादि ॥ य उक्तः **संवत्सर** इति स एव स्वयं **असावादित्यः** आदित्यक्षेत्रज्ञभावेन वर्तते । अथ **य एषः** मण्डले उपास्यः हिरण्मयः **पुरुषः एष भूतानामधिपतिः** स्वयं भूतानां स्वामी देवो मण्डले वर्तते । एतदुक्तं भवति—हिरण्यगर्भशरीरब्रह्माण्डान्तर्वर्तिहृदयाकाशस्थानीयो भूताकाशः तन्मध्यवर्तिवैश्वानराग्निस्थानीयं यदादित्यमण्डलं तदन्तर्वर्तिजीवात्मना[3] वर्तमानपरमात्मस्थानीयो यो मण्डलपुरुषः तत्र देव उपासितव्यः “त-

[1]उच्छ्वासादिकार्यात्. [2]जीवदशां. [3]जीवात्मा.

पुरुष एष भूतानामधिपतिर्[3]ब्रह्मणस्सायुज्यꣳ सलोकतामाप्नोत्येतासामेव देवतानाꣳ सायुज्यꣳ सार्ष्टिताꣳ समानलोकतामाप्नोति य एवं वेदेत्युपनिषत् ॥ २१ ॥ १४ ॥

[1]घृणिस्सूर्य आदित्यो [2]मर्चयन्ति तपस्सत्यं म-

---

स्मिन् यदन्तस्तदुपासितव्यं "* इति । एवं ज्ञात्वा परं ब्रह्म उपासीतेति ॥

[3]अथ वेदितुः स्तुतिः—**ब्रह्मणः** परस्य प्रपञ्चोत्तीर्णस्य **सायुज्यं** सयुग्भावं समानलोकतां च आप्नोति । **एतासां** च **देवतानां** प्रपञ्चान्तर्वर्तिनीनां तेजःप्रभृत्यभिमानिनीनां वा **सायुज्यं** सयुग्भावं **सार्ष्टितां** मूर्त्यैक्यं **समानलोकतां चाप्नोति । य एवं वेदा**पि किं पुनरुपासितेति । इयमेका **उपनिषत्** तत्प्रतिपाद्योपासना ज्ञातव्या ॥

इति याज्ञिक्युपनिषदि चतुर्दशोऽनुवाकः.

---

[1]**घृणिरित्यादि** ॥ सावित्रोऽष्टाक्षरः प्रणवान्तो मन्त्रः काठके विख्यातवैभवः† । सवितृरूपेण जगदनुगृह्णानं परं ब्रह्मास्य प्रतिपाद्यम् । **घृणिः** दीपनशीला दीप्तिमद्धा प्रकाशस्वभावः । घृ क्षरणदीप्त्योः । घृ सेचने । अन्यतरस्य निपात्यते । **सूर्यः** सोता

---

*अत्रैव. १०-२३. †ब्रा. ३-१०-९.

धुं क्षरन्ति तद्ब्रह्म तदाप आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम् ॥ ३० ॥ १५ ॥

अनुज्ञाता सविता प्रेरयिता विश्वस्य उत्पादयिता वा। इत्यादिपूरणेन 'सूर्य इति त्रीणि'* इति ब्राह्मणं नेयम् । केचित्तु—'सुवीर्यो मर्यायथा गोपायते'† इति ब्राह्मणानुसारेण सुवीर्यशब्दस्य मध्यमाक्षरलोपेन सूर्यपदं त्र्यक्षरत्वं चेति। आदत्ते ग्रसते विश्वमुपसंहारकाले स्वात्मनीति **आदित्यः** । आदिभूतो वा सर्वस्य । **ओमिति** अवतेर्निरुक्तम् । यथोक्तगुणकं प्रणवस्य वोध्यं वाच्यं वा यत् तदुपास्महे, ब्रह्मेति शेषः । ब्रह्मस्थाने प्रणवः । यलोपासिद्धिमनादृत्य 'ओ माङोश्च' इति पररूपत्वम् । सवितृनामधेयैः परस्य प्रतिपादनात् सवितृरूपेण स्थितं ब्रह्म प्रतिपाद्यमिति गम्यते ॥

[2]अथैतस्य मन्त्रस्य स्तुत्यर्थं मन्त्रान्तरं यजुः । अनुष्टुप् इत्येके—**अर्चयन्ति** पूजयन्ति यत् **तपः** फलभूतं **सत्यं** अविपर्यस्तं नित्यं **यच्च मधु** सर्वात्ममधुरं **क्षरन्ति** क्षारयन्ति अस्मात् ब्रह्मज्ञानात् **तद्ब्रह्म** तादृशं ब्रह्म **तदापः** । आप्नोतेरसुनि आपः । तदेव व्यापकं विश्वोपादानं ब्रह्म। **आपो ज्योतीरसोऽमृतं ब्रह्म** तेजोऽबन्नात्मिका या प्रकृतिः तदात्मकं यत् ब्रह्म अमृतं नित्यं किञ्च **यत् भूर्भुवस्सुवरों** लोकत्रयव्यापकं परंज्योतीरूपं यत्प्रणवात्मकं ब्रह्म तद्ब्रह्मोपास्महे इति शेषः। तदेव ब्रह्मार्यं सावित्र इत्यभिप्रायः ॥

इति याज्ञिक्युपनिषदि पञ्चदशोऽनुवाकः.

---

*ब्रा. ३-१०-९. †ब्रा. २-२-१०.

[1]सर्वो वै रुद्रस्तस्मै रुद्राय नमो अस्तु । पुरुषो वै रुद्रस्सन्महो नमोनमः । विश्वं भूतं भुवनं चित्रं

[1]**सर्वो वा** इत्यादि त्वरितरुद्रनामाऽनुवाकः । त्वरितेन किल रुद्रजापिना तत्फलप्राप्तये जप्यम् । **सर्वः** सर्वात्मा क्षितिसलिलहुतवहपवनगगनहिमकरदिनमणियजमानात्मभिरष्टाभिः मूर्तिभिः सर्वं व्याप्य स्थितत्वात् । **रुद्रो** रोदयिता सर्वस्यान्तकाले स्वात्मन्युपसंहर्ता । यथा 'य इमा विश्वा भुवनानि जुह्वत् '* इति । **तस्मै** तादृशाय **रुद्राय नमोऽस्तु** । **रुद्रायेति** पुनर्वचनं रुद्रपदप्रियत्वात् देवस्य । ननु पुरुषोपादानत्वात् सर्वस्य कथं विश्वाधिपती रुद्रः सर्वात्मा स्यात् । तत्राह—**पुरुषो** नारायणः यं सर्वात्मकमाहुः । स खलु **रुद्र** एव अवस्थाविशेषत्वात् । रुद्रोपि तदात्मना तिष्ठतीति । तस्माद्रुद्रस्यैव पुष्कलसर्वात्मकत्वं प्रपञ्चावधिकं तु पुरुषस्य । का पुनस्साऽवस्थेत्याह—सदिति सङ्कल्पेन यदा सदजायत तदा तत् **सद्रूपं** विश्वोपादानं पुरुषोऽभवत् । कीदृक् पुनस्तादित्याह—**महो नम इति** । षष्ठ्येकवचने 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । असुनि चाद्युदात्तत्वं स्यात् । **नमः** नमनं प्रपञ्चसृष्टिं प्रति देवस्य प्रह्वीभावः । यथा "सम्बाहुभ्यां नमति संपतत्रैः "* इति । अयमर्थः—महत्रो देवस्य यन्नमनं प्रपञ्चसृष्टौ प्रह्वीभावः सच्छब्दवाच्यः [च्या] सा पुरुषावस्थाऽपि रुद्रस्यैवेति तस्मै देवाय नमस्कुर्मः । यस्मादेवं तस्मात् **विश्वं** विश्वात्मा पुरुषः **भूतं** तस्माद्विश्वात्मनः उत्पन्नं **भुवनं** भूतजातं **चित्रं** चायनीयं

*सं. ४-६-२.

**बहुधा जातं जायमानं च यत् । सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु ॥ ३१ ॥ १६ ॥**

[1]**कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे । वोचेम शंतमꣳ हृदे । [2]सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु ॥ ३२ ॥ १७ ॥**

---

पृथिव्यादि **बहुधा** बहुप्रकारं **जातं** तस्मात्पृथिव्यादेरुत्पन्नं घटादि, **जायमानं** जनिष्यमाणं **च यत्** तत् सर्वं **रुद्र** एव। **तस्मै रुद्राय नमोऽस्तु**॥

इति याज्ञिक्युपनिषदि षोडशोऽनुवाकः.

---

[1]**कद्रुद्रायेति** गायत्री यजुरन्ता ॥ पूर्ववद्विनियोगः । **कत्** प्रशस्तं श्लाघनीयं स्तोत्रम् । कत्थ श्लाघायाम्, क्विपि संयोगान्तलोपः । प्रशस्तवाची निपात इति केचित् । **शन्तमं** सुखसाधनतमं दुःखानां वा शमयितृतमं स्तोत्रं **रुद्राय प्रचेतसे** प्रकृष्टमनुग्रहः चित्तं वा यस्य तादृशाय **मीढुष्टमाय** सेक्तृतमाय जगतां पित्रे **तव्यसे** तवो वृद्धिरतिशयेन तद्वते । तवसशब्दादीयसुनि 'विन्मतोर्लुक्' इति मतुपो लुक् । कृते टिलोपे ईयसुन ईकारस्य छान्दसो लोपः । प्रपञ्चरूपेण वर्तमानायेत्यर्थः । **हृदे** हृदिस्थिताय **वोचेम** ब्रूमहे । 'लिङ्याशिष्यङ्' 'वच उम्' ॥

[2]सर्वो ह्येष इत्यादि व्याख्यातम् ॥

इति याज्ञिक्युपनिषदि सप्तदशोऽनुवाकः.

---

[1]नमो हिरण्यबाहवे हिरण्यपतयेऽम्बिकापतय उमापतये नमोनमः ॥ ३३ ॥ १८ ॥

[1]यस्य वैकङ्कत्यग्निहोत्रहवणी भवति प्रति-

---

[1]**नमो हिरण्यबाहव इति** ॥ स एव विनियोगः । **हिरण्यबाहवे** हिरण्याभरणालङ्कृतबाहवे हिरण्यसवर्णसर्वाङ्गाय बाहुग्रहणस्य उपलक्षणत्वात् । **हिरण्यपतये** हितरमणीयानामर्थानां स्वामिने हिरण्यस्यैव वा पात्रे । आत्मीयरेतस्त्वात्तस्य । **अम्बिकापतये** अम्बिकाया भर्त्रे । **उमापतये** उमावल्लभाय । आदरार्थं पुनर्वचनं उमाशब्दप्रियत्वात् वामदेवस्य । यद्वा—प्रपञ्चदशायां अम्बिका देवी भवति । अम्ब शब्दे । अम्बयति सविकल्पं जगदुत्पादयतीति अम्बिका सर्वविकल्पोन्मेषवती परा शक्तिः । प्रपञ्चविलये तु परशक्तिरूपेण स्थिता प्रणवपर्यायेण उमाशब्देनोच्यते । तस्योक्तं निर्वचनम् । तादृशाय परस्मै ब्रह्मणे उमापतये **नमः** । उमायै च **नम** इति नमश्शब्दावृत्त्या वाक्यभेदाल्लभ्यते । नैतद्द्विर्वचनं द्वितीयस्याप्युदात्तत्वात् ॥

इति याज्ञिक्युपनिषदि अष्टादशोऽनुवाकः.

---

[1]एवं परां देवतां स्तुतां पुनरप्यात्मना स्तौति । तत्रादौ अग्नेः असाधारणाराधनेऽग्निहोत्रे गुणविधिः क्रियते—यस्येति ॥ "सा यत्राहुतिः प्रत्यतिष्ठत्ततो विकङ्कत उदतिष्ठत्ततः प्रजा असृजत"*

---

*सं. ३-५-७.

ष्ठिताः प्रत्येवास्याहुतयस्तिष्ठन्त्यथो प्रतिष्ठित्यै ॥ ३४ ॥ १९ ॥

[1]कृणुष्व पाज इति पञ्च ॥ ३५ ॥ २० ॥

---

इति विकङ्कतस्य प्रजासृष्टिहेतुत्वात् प्रपञ्चसृष्टिप्रतिपादनप्रकरणे अस्मिन्नग्निरूपेण प्रपञ्चवृद्धिं कुर्वतो देवस्य प्रीणनत्वात् **यस्य** यजमानस्य **वैकङ्कती** विकङ्कतस्य विकारः **अग्निहोत्रहवणी भवति** । 'पलाशादिभ्यो वा' इत्यङ् । अग्नये होतव्य मित्यग्निहोत्रं हविः । तद्धूयतेऽनयेति अग्निहोत्रहवणी विकङ्कतस्य प्राजापत्याहुतिप्रतिष्ठाप्रभवत्वात् तादृशी यस्याग्निहोत्रहवणी भवति । **अस्य आहुतयः प्रतिष्ठिताः प्रतितिष्ठन्त्येव** फलसाधनत्वस्वरूपात् न प्रच्यवन्ते **अथो** अपि च तस्यापि यजमानस्य **प्रतिष्ठित्यै** सा भवति । एवं ज्ञात्वाऽग्न्यात्मानं देवमाराधयेत् उपासीतेति ॥

इति याज्ञिक्युपनिषदि एकोनविंशोऽनुवाकः.

---

[1]'**कृणुष्व पाजः प्रसितिं न पृथ्वीम्**'* इत्यादयः **पञ्च** राक्षोघ्नचः अग्न्यात्मनो देवस्य उपासनादौ विनियोज्याः । ताश्चात्र प्रकरणानुरोधात् ब्रह्मप्रतिपादकतया व्याख्येयाः ॥

इति याज्ञिक्युपनिषदि विंशोऽनुवाकः.

---

* सं. १-२-१४.

[1]अदि॑तिर्दे॒वा ग॑न्ध॒र्वा म॑नु॒ष्याः॑ पि॒तरो॒ऽसु॑रा॒स्तेषा॑ᳫ्ँ सर्व॑भू॒ताना॑ṁ मा॒ता मे॒दिनी॑ मह॒ती म॒ही सा॑वि॒त्री गा॑य॒त्री जग॑त्यु॒र्वी पृ॒थ्वी ब॑हु॒ला वि॒श्वा॑ भू॒ता क॑त॒मा का या सा स॒त्येत्य॒मृतेति॑ वसि॒ष्ठः ॥३६॥२१

---

[1]अदितिरित्यादि ॥ पृथ्वीरूपेण ब्रह्मणस्स्तुतिः । **अदितिः** अखण्डनीया पृथिवी । देवादीनां पञ्चानां ग्रहणं प्राधान्यात् । ये देवादयः **तेषा**मन्येषामपि **सर्वभूतानां** विहगोरगादीनां **माता** मातृवत् पोषयित्री साक्षात्परंपरया च **मेदिनी** स्नेहवती **महती** महापरिमाणा **मही** पूजिता **सावित्री** सवितुः सर्वस्य नेतुः स्वभूता तनुत्वात् **गायत्री** गातव्या **जगती** भृशमविच्छेदेन गच्छन्ती अनुपरतप्रभावा **उर्वी** गौरवेण महती **पृथ्वी** विस्तीर्णा **बहुला** बहूनामर्थानां लात्री **विश्वा** व्याप्तिमती **भूता** महाभूतात्मिका **कतमा** अशक्यनिर्धारणा **का** अव्यक्तरूपा **या** यादृशी भवति **सा** तादृशी सती **सत्या** अविपर्यस्तस्वभावा । **इतिशब्दः** प्रदर्शनार्थः । एवमादिभिरन्यैश्च गुणैर्धात्री विश्वम्भरा वसुन्धरा सर्वसहेत्यादिभिः तद्वती । किञ्च—**अमृता** अमरणा च । द्वितीय **इतिशब्दो** हेतौ । यस्मादियमेवंस्वभावा तस्मादिदमेव ब्रह्मणो रूपं उपास्यमिति **वसिष्ठः** प्रशस्त आह । ब्रह्मज्ञो जनो वसिष्ठ एव भवति । तस्मादिदमुपास्महे इति शेषः ॥

इति याज्ञिक्युपनिषदि एकविंशोऽनुवाकः.

---

[1]आपो वा इदꣳ सर्वं विश्वा भूतान्यापः प्राणा वा आपः पशव आपोऽमृतमापोऽन्नमापस्सम्राडापो विराडापस्स्वराडापश्छन्दाꣳस्यापो ज्योतीꣳष्यापस्सत्यमापस्सर्वा देवता आपो भूर्भुवस्सुवराप ओम् ॥ ३७ ॥ २२ ॥

[1]आपः पुनन्तु पृथिवीं पृथिवी पूता पुनातु

---

[1]आपो वा इत्यादिनाऽनेन ब्रह्म स्तूयते । इदं दृश्यमानं श्रूयमाणं च सर्वमाप एव तदधीनत्वात् । किंकिमित्याह— **विश्वा** विश्वानि **भूतानि** पृथिव्यादीनि **प्राणाः** चक्षुरादयः **पशवो** द्विपादः चतुष्पादश्च **अमृतं** आत्मा **अन्नं** अदनीयं **सम्राट्** सङ्गतदीप्तिः **विराट्** विविधदीप्तिकं **स्वराट्** स्वायत्तदीप्तिकं **छन्दांसि** गायत्र्यादीनि **ज्योतींषि** आदित्यादीनि **सत्यं** ब्रह्म प्रपञ्चोत्तीर्णं **सर्वा देवताः** प्रपञ्चान्तर्वर्तिन्यः **भूर्भुवस्सुवः** व्याहृत्यात्मका लोकाः **ओं** परमात्मा **आप एव** । तस्मात्ता उपास्महे इति शेषः ॥

इति याज्ञिक्युपनिषदि द्वाविंशोऽनुवाकः.

---

[1]आपः पुनन्तु इति ॥ अत्यष्टिरष्टपदा । द्वितीयवर्जमष्टाक्षराः पादाः । द्वयोर्द्वयोः पादयोर्विरामः । स्नानकाले मन्त्रवदाचमने विनियोगः । **आपः पुनन्तु** शोधयन्तु **पृथिवीं** कारणेन कार्यशुद्धिः प्रार्थ्यते । सा चाद्भिः **पूता पृथिवी मां पुनातु** स्वकार्य-

**माम् । पुनन्तु ब्रह्मणस्पतिर्ब्रह्म पूता पुनातु माम् । यदुच्छिष्टमभोज्यं यद्वा दुश्चरितं मम । सर्वं पुनन्तु मामापोऽसतां च प्रतिग्रहꣳ स्वाहा ॥ ३८ ॥ २३ ॥**

[1]**अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः ।**

---

भूतम् । किञ्च—**ब्रह्मणस्पतिः** परिवृढस्य प्रपञ्चस्य **ब्रह्मणः पतिः** परमात्मा कारणं **ब्रह्म** ब्राह्मणानि मन्त्राश्च पृथिवीं पुनन्तु अपुनन् । सा च तैः **पूता मां पुनातु** । यत् मम सम्बन्धि **उच्छिष्टं** अप्राच्यकरं मूत्रोत्सर्जनादि चण्डालोपस्पर्शनादि च **यच्चाभोज्यं** केशकीटाद्यवपन्नादि **मम** सम्बन्धि **दुश्चरितं** दुष्टं शास्त्रनिषिद्धं प्रतिषिद्धमैथुनादि तन्निमित्तं पापं **सर्वं** मदीयं धर्मधर्मिणोरभेद उपचर्यते । यद्वा—मां च मयि पूर्वसंचितं च पापं **आपः पुनन्तु** । **असतां** शूद्रादीनां **च प्रतिग्रहं** प्रतिग्रहनिमित्तं च पापं शोधयन्त्विति ॥

इति याज्ञिक्युपनिषदि त्रयोविंशोऽनुवाकः.

---

[1]पापशोधनार्थं सायं अप आचामति—**अग्निश्चेति** ॥ मध्ये विरामास्सप्त । 'अकार्षं मनसा' इति तु सहाध्येतव्यम् । तत्र प्रथमा त्रिपदा गायत्री । **यदह्नेति** पङ्क्तिः अष्टाक्षरा पञ्चपदा । **इदमह** मिति विराट्, द्विपदा गायत्री वा । उपक्रान्ताया रात्रेरधिपतिः **अग्निः** । तत्र करिष्यमाणानां **पापानां** तारयिता नि-

पापेभ्यो रक्षन्ताम् । यदह्ना पापमकार्षम् । मनसा वाचा हस्ताभ्याम् । पद्भ्यामुदरेण शिश्ना । अहस्तदवलुम्पतु । यत्किंच दुरितं मयि । इदमहं

---

वारयिता च मन्युः मननशीलमन्तःकरणं सर्वप्रवृत्तिनिवृत्तिहेतुः । क्रोध इत्येके । **मन्युपतयः** मन्योः परिपालकाः प्राणादयः चक्षुरादयश्च ते सर्वे **मन्युकृतेभ्यः** कृतशब्दः कारणवाची मन्युकारणेभ्यः **पापेभ्यः रक्षन्तां** यथा चोरेभ्यो गृहं रक्ष्यतामिति चोराणामप्रवेशाय यतन्ते । यथा अहं पापं न करिष्यामि तथा कुर्वन्तु । किञ्च—**अह्ना**ऽतिक्रान्तेन । 'अपवर्गे तृतीया' अतिक्रान्तेऽह्नि **यत्पापं अकार्षं** कृतवानेवास्मि **मनसा** प्रतिषिद्धचिन्तनादिभिः यच्च **वाचा** प्रतिषिद्धोच्चारणादिभिः यच्च **हस्ताभ्यां** तृणादिहिंसादिभिः यच्च **पद्भ्यां** अनाक्रमितव्याक्रमणादिभिः यच्च **उदरेण** अभोज्यभोजनादिभिः **शिश्ना** शिश्नेन अगम्यागमनादिभिः । 'सुपां सुलुक्' इत्याकारः । एतैः यत्पापमकार्षं अन्हि तत्सर्वं **तदेवाहः अवलुम्पतु** नाशयतु । अथेदानीं कृतकरिष्यमाणेषु पापेषु निहितेषु अन्यदपि **यत्किंच दुरितं** पापं प्राचीनजन्मसंचितं यद्वा मनआदिव्यतिरेकेण श्रोत्रादिना कृतं अश्रोतव्यश्रवणादिभिः कृतं अनिर्ज्ञातसाधनं वा यत्पापं **मयि** तिष्ठति **इदं** पापं **मां** चास्य कर्तारम् । यद्वा—मदीयं पापं धर्मधर्मिणोरभेदः उपचर्यते । **अमृतयोनौ** अमृतत्वकारणे ब्रह्मणि किमात्मके **सत्ये** अविपर्यस्ते अग्नौ **ज्योतिषि** द्योतमाने ज्वलिते आत्मज्योतिषि अग्नचात्मनि

**मामममृतयोनौ । सत्ये ज्योतिषि जुहोमि स्वाहा ॥ ३९ ॥ २४ ॥**

[1]**सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः । पापेभ्यो रक्षन्ताम् । यद्रात्रिया पापमकार्षम् । मनसा वाचा हस्ताभ्याम् । पद्भ्यामुदरेण शिश्ना । रात्रिस्तदवलुम्पतु । यत्किंच दुरितं मयि । इदमहं मामममृतयोनौ । सूर्ये ज्योतिषि जुहोमि स्वाहा ॥ ४० ॥ २५ ॥**

---

उपक्रान्तराज्यधिपतौ जुहोमि प्रक्षिपामि । यथा पापतां हित्वा अमृतत्वस्यैव कारणं स्यादिति भावः । होमप्रतिपत्तिसंपादनेन श्रेयस्साधनतामेव पापप्रक्षेपस्य सूचयितुं जुहोमीत्युक्तम् । स्वाहुतं चेदमस्त्विति **स्वाहा**कारेण दर्शयति । यद्वा—इत्थमिदं कर्तव्यमिति प्रजापतेः स्वैव वागाहेति बोधयति ॥

इति याज्ञिक्युपनिषदि चतुर्विंशोऽनुवाकः.

[1]**सूर्यश्चेति** प्रातराचमनीयम् । अन्यत्सर्वं पूर्ववत् । **सूर्यः** उपक्रान्तस्य अह्नोऽधिपतिः । **रात्रिया** कृतं पापं **रात्रिरवलुम्पत्वि**ति विशेषः । **सूर्ये ज्योतिषि जुहोमि** उपक्रान्तस्यान्होऽधिपतौ होमः । गतमन्यत् ॥

इति याज्ञिक्युपनिषदि पञ्चविंशोऽनुवाकः.

[1]आयातु वरदा देव्यक्षरं ब्रह्मसम्मितम् । गायत्रीं छन्दसां मातेदं ब्रह्म जुषस्व नः । ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवानां धाम नामासि विश्वमसि विश्वायुस्सर्वमसि सर्वायुरभिभूरों गायत्रीमावाहयामि ॥ ४१ ॥ २६ ॥

---

[1]आयात्वित्ति गायत्र्यावाहने अनुष्टुप् यजुरन्ता ॥ **आयातु** आगच्छतु **वरदा** वरणीयानामर्थानां दात्री **देवी** द्योतनवती छन्दोऽभिमानिनी देवता । इदानीं प्रत्यक्षवदाह—हे देवि ! आगत्य **छन्दसामु**ष्णिगादीनां **माता** योनिभूता त्वं **इदं नः** अस्मदीयं **ब्रह्म अक्षरं** क्षतिरहितं **ब्रह्मसम्मितं** ब्रह्मसंकाशं **गायत्रीं** गायत्रीछन्दस्कं **जुषस्व** सेवस्व । कस्मादेवमुच्यत इति चेत्—**ओजः** देहशोभा **असि सहः** अभिभवनशक्तिः **असि बलं** सामर्थ्यं **असि भ्राजः** दीप्तिः **असि देवानां धाम** स्थानं **असि** । कीदृशं **नाम** नमनं वशीकरणम् । किं बहुना **विश्वं** जगत् **असि विश्वायुः** विश्वमायुर्जीवितमन्नं वा यस्यां तादृशी **असि सर्वं** सर्वप्रकारं श्रेयस्त्वं **असि** । प्रकारकात्स्न्र्ये सर्वशब्दः । **सर्वायुः** सर्वप्रकारस्यायुषो हेतुः **अभिभूः** अभिभवित्री शत्रूणामसि । **ओं** व्याप्तिमतीं ब्रह्मात्मिकां तादृशीं **गायत्रीमावाहयामि** मम समीपं प्रापयामि ॥

इति याज्ञिक्युपनिषदि षड्विंशोऽनुवाकः.

---

[1]ओं भूः । ओं भुवः । ओ३ं सुवः । ओं महः ।

---

[1]**ओं भूरित्यादि** ॥ प्रणवव्याहृतिशिरोभिः सहिता सावित्री प्राणायामार्था । अस्यास्त्रिरावर्तनकालं प्राणापानवृत्तिनिरोधः प्राणायामः । यथोक्तम्—

**ओंकारपूर्विकाभिस्तु लोकव्याहृतिभिस्सह ।**
**सावित्री शिरसा सार्धं प्राणायामः प्रकीर्तितः ॥**

इति । एवं त्रीन् षोडश वा धारयेत् । तत्सवितुरिति सावित्री त्रिपदा निचृद्गायत्रीछन्दस्का अक्षरोनत्वादस्याः* । विश्वामित्रस्यार्षेयम् । सविता देवता । अस्यास्तु प्रणवव्याहृतिसहितायाः उपनयनादिषु च विनियोग उक्तः । प्रणवः स्वयम्भुवो ब्रह्मण आर्षेयम् । दैवी गायत्री छन्दः "देवानामेकं" इति वचनात् । परमात्मा वाच्या देवता । तात्पर्यप्रतिपाद्यं परब्रह्माधिदैवतम् । अनेन वाचकनोत्थापितसंस्कारः परमात्मा साधकाभिमुखो भूत्वा प्रणवाग्रस्थं† परं ब्रह्म दर्शयति । यथोक्तम्—

**तैलधारामिवाच्छिन्नं दीर्घं घण्टानिनादवत् ।**
**अवाच्यं प्रणवस्याग्रं यस्तु‡वेद स वेदवित् ॥ इति ॥**

सा अन्या अर्धमात्रा दर्पणवत् परंब्रह्म दर्शयति । इदमेवोक्तम्— 'तस्य प्रकृतिलीनस्य यः परस्स महेश्वरः '§ इति । तस्य चानादिवाच्यवाचकभावो गुरुभिरुद्दीपित उपासकानां अपरोक्षावबोधगोचरो

---

*...दस्याः यथा "न्यूनाधिकैकेन निचृद्भूरिजौ" इति. इत्यधिकं क्वचित्.
†प्रणवगृहस्थं प्रणवग्रन्थिं इति च पाठान्तरे. ‡यस्तं. §अत्रैव. १०-२४.

**ओं जनः । ओं तपः । ओ३ सत्यम् । ओं तथ्सं-**

---

भवति । न तस्य लोके उज्ज्वलति* । पितापुत्रादीनां हि स्थित एव सम्बन्धो लौकिकैः ख्याप्यते—'अयं पिता अयं पुत्रः' इति । अयं च कर्मार्थितया प्रयुज्यमानस्त्रिमात्रो भवति । ध्यानकाले त्वात्मोपासने विनियुज्यमानः अर्धमात्रातिरेकेण ध्वनति । तिसृभिः मात्राभिः सर्वमिदं वाङ्मयं व्याप्तम् । आदिभूतस्सर्वः पदार्थोऽकारः, मध्यभूतस्सर्व उकारः, अन्त्यभूतस्सर्वो मकारः । व्यञ्जनस्यापि मात्रिकत्वमिष्यते । एवमनेन ओङ्कारात्मना सर्वभावसञ्चारिणा त्रयो लोकास्तिस्रोऽग्निवाय्वादित्याः तद्देवतास्त्रयो देवाः ब्रह्मविष्णुरुद्राः त्रीणि तत्कार्याणि सृष्ट्यादीनि त्रयो वेदाः त्रयोऽग्नयः त्रीणि सवनानि तिस्रोऽवस्था जाग्रत्स्वप्नसुषुप्तयः त्रयस्स्वभावाः आध्यात्मिकाधिभौतिकाधिदैविकाः सूक्ष्मव्यवहितविप्रकृष्टाविप्रकृष्टा व्याप्ताः । "तद्यथा सर्वाणि पर्णानि शङ्कुना संतृण्णान्येवमोङ्कारेण सर्वा वाक् संतृण्णा" इति श्रुतिः । तथा 'ओमितीदं सर्वम्'† इति । एतेन ओङ्कारेण बोधितः परमात्मा प्रत्यगात्मनः प्रसीदति । ततोऽयमाविर्भूतपरमात्मज्योतीरूपसम्पत्त्या सत्यकामस्सत्यसङ्कल्पः परां देवतामधिगच्छति ॥

अथ भूरादयो व्याहृतयः सप्त लोकात्मिकाः । आसामात्मनः प्रत्येकं पर्यायवाचकत्वख्यापनाय प्रत्येकं मन्त्रत्वाच्च प्रधानवाचकेन प्रणवेन प्रत्येकमभिसम्बन्धः । तासामाद्यास्तिस्रो महाव्याहृतयः क-

---

*"भवति । सतहने उज्ज्वलति" "भवति । तस्य के उज्ज्वलति" इति च पाठान्तरम्. †आ. ५-८.

**वि॒तुर्वरे॑ण्यं॒ भर्गो॑ दे॒वस्य॑ धीमहि । धियो॒ यो नः॑**

---

मंत्रेषादौ प्रत्येकं विनियोगात् । आदौ जगत्सिसृक्षुः प्रजापतिः प्रजानां स्थित्याद्यर्थं सत्वमभिसन्धाय सप्तकृत्वो व्याहरत् । ता व्याहृतयो भूराद्याः सप्तलोका अभवन् । सप्त बलाधारपटलभूताः सप्तलोकभावेन व्यवस्थिता इति स्मृतिः । गायत्र्युष्णिगनुष्टुप् बृहती पङ्क्तिः त्रिष्टुप् जगतीति सप्त छन्दांसि । अग्निवाय्वर्कबृहस्पतिवरुणेन्द्रविश्वदेवा देवताः । व्याहर्ता प्रजापतिः ऋषिः । भुवरादयः पञ्चान्ते स्वरिताः । भवन्त्यस्यां सर्वाणि भूतानीति **भूः** । कर्मफलोपभोगपरिग्रहेण भवन्त्यस्मिन्निति **भुवः** । यद्वा—शीतोष्णवृष्ट्युदकतेजांसि अमुष्मात् भवन्तीति **भुवः** । अङि छान्दसो वर्णविकारः । तित्स्वरे अन्तस्वरितत्वम् । सुष्ठु व्याप्यते सुकृतिभिरिति **सुवः** । सुपूर्वादर्तेर्विचि तन्वादित्वादुवङ्, "न्यङ्स्वरौ स्वरितौ" इत्यन्त्यस्वरितत्वम् । एते त्रयो लोका उत्तरोत्तरमणीयांसः । पञ्चमादयस्त्रय उत्तरोत्तरमल्पी[ं महीं ?]यांसः। चतुर्थस्तु अधरोत्तरेभ्यो महत्तमः । अत एव **महरिति** उच्यते । महतेरसुन् । महतो वाऽन्त्यविकारोऽन्तस्वरितत्वं च । कल्पान्ते महाभूतसंप्लवे प्रलीना जन्तवः तत्र प्रथमं जायन्त इति **जनः** । सनत्कुमारादयो योगीन्द्राः तस्मिन् तपस्तप्यन्त इति **तपः** । तपोमयो वा आमहाभूतसंप्लवात् अविपर्यस्तस्वभाव इति । सत्यव्रतानां स्थानं **सत्यम्** । एवमेताः सप्त व्याहृतयः सप्रणवाः प्राणायामे प्रयोक्तव्याः । यथाऽऽहुः—

**प्रणवे नित्ययुक्तस्य व्याहृतीषु च सप्तसु ।**
**त्रिपदायां तु गायत्र्यां न भयं विद्यते कचित् ॥ इति ॥**

**प्रचोदयात् । ओमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम् ॥ ४२ ॥ २७ ॥**

---

अथ प्रणवादिका सावित्री—**ओंतत्सवितु**रित्यादिका । अस्या उपकरणानि प्रणवव्याहृतिशिरांसि । इयं तु प्रधानभूता । यथाऽऽहुः—

**सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ॥**

इति । व्याख्याता चेयं 'सं पश्यामि'* इत्यत्र ॥

अथ **ओमाप** इत्यादि शिरः ॥ शिर इव शिरः उपरि स्थितत्वात् । एतत्प्रजापतेः परमेष्ठिनः आर्षेयम् । धातुरनुष्टुबेषा षोडशाक्षरत्वात् । ब्रह्माग्निवायुसूर्यदेवताकम् । इदं च व्याख्यातं 'घृणिस्सूर्यः'† इत्यत्र । एवं प्रणवव्याहृतिशिरोवाच्यव्यापारतादर्थ्यं‡ महिमातिशयं सावित्रीप्रतिपादकस्य सवितुः देवस्य प्रपञ्चातीतस्य प्रेकरस्य स्वामिनः स्वभूतं विश्वं प्रपञ्चात्मकमादित्याख्यं वरेण्यं तेजो वयमुपास्महे इति विवक्षितम् ॥

इति याज्ञिक्युपनिषदि सप्तविंशोऽनुवाकः.

---

*सं. १-५-६. †अत्रैव. १०-२. ‡...वाच्यपरतादार्थ्यं.

[1]ओं भूर्भुवस्सुवर्महर्जनस्तपस्सत्यं तद्ब्रह्म तदाप आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम् ॥ ४३ ॥ २८ ॥

[1]ओं तद्ब्रह्म । ओं तद्वायुः । ओं तदात्मा । ओं तथ्सर्वम् । ओं तत्पुरोर्नमः ॥ ४४ ॥ २९ ॥

---

[1]**ओं भूर्भुवस्सुवरित्यादि** ॥ पूर्वेण सहास्य प्राणायामे विकल्पः । विशेषस्तु प्रणवावृत्तिरहिता व्याहृतयः सावित्र्यास्स्थाने "तद्ब्रह्म तदापः" इति प्रयुज्यत इति । समानमन्यत् ॥

इति याज्ञिक्युपनिषदि अष्टाविंशोऽनुवाकः.

---

[1]**ओं तद्ब्रह्मेत्यादि** ॥ अयमपि विकल्प एव । प्रणवात्मकं ब्रह्म स्तूयते । ओमित्येतदक्षरं **ब्रह्म** । यद्वा—ओमित्येतद्बोध्यं तत् परं वस्त्वेव ब्रह्म बृंहणशीला प्रकृतिः । तत् एव **वायुः** वातः सर्वक्रियोपादानम् "वाताद्यज्ञः प्रयुज्यताम्"* इति । **तत्** एव **आत्मा** विज्ञानात्मा । **तत्** एव **सर्वं** विश्वात्मा परमात्मा । **तत्** एव **पुरोः** बलवतः प्रपञ्चस्य **नमः** नामविकल्पहेतुः शब्दो विभुः । यद्वा—पुरोर्महतो देवस्य यन्नमः प्रह्वीभावः प्रपञ्चोन्मेषहेतुः परा शक्तिः साऽपि तदेव परंब्रह्मेति । पुरुशब्द आद्युदात्तः ॥

इति याज्ञिक्युपनिषदि एकोनत्रिंशोऽनुवाकः.

---

*ब्रा. ३-७-४.

[1]उत्तमे शिखरे देवी भूम्यां पर्वतमूर्धनि । ब्राह्मणेभ्यो ह्यनुज्ञानं गच्छ देवि यथासुखम् ॥४५॥ ३०

[1]ओमन्तश्चरति भूतेषु गुहायां विश्वमूर्तिषु । त्वं यज्ञस्त्वं विष्णुस्त्वं वषट्कारस्त्वꣳ रुद्रस्त्वं ब्रह्मा त्वं प्रजापतिः ॥ ४६ ॥ ३१ ॥

---

[1]उत्तम इत्यादि अनुष्टुप् सावित्र्या उत्सर्जने विनियुक्ता ॥ **उत्तमे** उन्नततमे पुण्यतमे **शिखरे** उच्छ्रिते देशे **भूम्यां** वा **पर्वतमूर्धनि** वा उच्छ्रिते देशे **देवी** देवनशीला क्रीडापरा त्वं तादृशे देशे गच्छ । हे **देवि**! गायत्रि! **यथासुखं** यत्र गतायाः सुखं भवति तत्र **गच्छ** । **अनुज्ञानं** अनुज्ञातमस्माभिः । कर्मणि ल्युट् । क्रियाविशेषणं वा । तादर्थ्ये चतुर्थी । **ब्राह्मणेभ्यो** ब्राह्मणार्थमेव **गच्छ** पुनरपि ब्राह्मणसमीपमागन्तुं प्रतीक्षमाणैव उत्तमे स्थाने तिष्ठति॥

इति याज्ञिक्युपनिषदि त्रिंशोऽनुवाकः.

---

[1]**ओमन्त** इति अस्तारपङ्क्तिः प्रणवोपासने विनियुज्यते ॥ ओंकारवाच्यं परं तत्त्वं **भूतेषु** भूतजालेषु **विश्वमूर्तिषु** नानादेहभिन्नेषु सर्वशरीरविशेषेषु* **अन्तः** मध्ये **गुहायां** हृदयावकाशे **चरति** प्रणवात्मना ध्वनाति । प्रत्यक्षवदाह—**त्वं यज्ञ** इत्यादि । यज्ञादिभावेन त्वमेव तिष्ठसीति । **ब्रह्मा** हिरण्यगर्भः । **प्रजापतिः** परमात्मा ॥

इति याज्ञिक्युपनिषदि एकत्रिंशोऽनुवाकः.

---

*विशेषशालिषु.

[1]अमृतोपस्तरणमसि ॥ ४७ ॥ ३२ ॥

[1]प्राणे निविष्टोऽमृतं जुहोमि । प्राणाय स्वाहा । अपाने निविष्टोऽमृतं जुहोमि । अपानाय स्वाहा । व्याने निविष्टोऽमृतं जुहोमि । व्यानाय स्वाहा । उदाने निविष्टोऽमृतं जुहोमि । उदानाय स्वाहा ।

---

[1]अथ प्राणाग्निहोत्रमन्त्राः आत्मयाजिनाम् । उपस्तृणाति—**अमृतोपस्तरणमसीति** । **उपस्तरणं** आस्तरणं यत्र अमृतं अन्नं ब्रह्म सीदतीति तदेव त्वमसि हे उदक! इति अपोऽन्तः क्षिपति ॥

इति याज्ञिक्युपनिषदि द्वात्रिंशोऽनुवाकः.

---

[1]जुहोति—**प्राणे निविष्ट इति** ॥ **प्राणे** प्राणनिमित्तं **निविष्टः** अभिनिविष्टः तत्स्थित्यै यतमानोऽहम् । यद्वा—**प्राणे निविष्टः** अवस्थितः तदधीनस्थितिकत्वात् सोऽहं **अमृतं** अमरणहेतुं अमृतात्मकब्रह्मस्वरूपं वा इदमन्नं **जुहोमि** आत्मज्योतिषि प्रक्षिपामि **प्राणाय** देवतायै **स्वाहा** हुतं चेदमस्तु । एवमपानादिषु च योज्यम् । तत्र प्राणः ऊर्ध्ववृत्तिः मुखनासिकनिस्सरणः । अपानः अवाग्वृत्तिः । व्यानः विष्वग्वृत्तिः । उदानः शब्दकारी । समानः सर्वाङ्गेषु अशितपीतादेस्समीकर्ता । ब्रह्मणीति । इदानीमनेनान्नहोमेन मे **आत्मा** शरीरं **ब्रह्मणि** एव स्थितम् । तच्च मम

समाने निविष्टोऽमृतं जुहोमि । समानाय स्वाहा । ब्रह्मणि म आत्माऽमृतत्वाय ॥ ४८ ॥ ३३ ॥

[1]प्राणे निविष्टोऽमृतं जुहोमि । शिवो माऽऽविशाप्रदाहाय । प्राणाय स्वाहा । अपाने निविष्टोऽमृतं जुहोमि । शिवो माऽऽविशाप्रदाहाय । अपानाय स्वाहा । व्याने निविष्टोऽमृतं जुहोमि । शिवो माऽऽविशाप्रदाहाय । व्यानाय स्वाहा । उदाने निविष्टोऽमृतं जुहोमि । शिवो माऽऽविशाप्रदाहाय । उदानाय स्वाहा । समाने निविष्टोऽमृतं जुहोमि ।

---

अमृतत्वाय भवति । यद्वा—अमृतत्वाय ममात्मा ब्रह्मणि तिष्ठतु अनेनान्नप्रक्षेपेण । यद्वा—ब्रह्मणि अन्ने मम शरीरं स्थितं तदधीनस्थितिकत्वात् । तस्यामृतत्वाय इदमन्नं जुहोमि ॥

इति याज्ञिक्युपनिषदि त्रयस्त्रिंशोऽनुवाकः.

---

[1]प्राणे निविष्ट इत्यादि ॥ पूर्वेण विकल्प्यते । व्याख्यातप्रायो मन्त्रः । विशेषस्तु शिव इत्यादि । शिवः शान्तः अनुपद्रवहेतुर्भूत्वा मां आविश । हे अन्न ! । ‘सुपां सुलुक्’ इति स्वादेशः । यद्वा—शिव एव भूत्वा मामाविश । किमर्थं

शिवो मांऽऽविशाप्रदाहाय । समानाय स्वाहा । ब्रह्मणि म आत्माऽमृतत्वाय ॥ ४९ ॥ ३४ ॥

[1]अमृतापिधानमसि ॥ ५० ॥ ३५ ॥

[1]श्रद्धायां प्राणे निविश्यामृतꣳ हुतं प्राणमन्नेनाप्यायस्व । अपाने निविश्यामृतꣳ हुतमपानमन्नेनाप्यायस्व । व्याने निविश्यामृतꣳ हुतं व्यानमन्नेनाप्यायस्व । उदाने निविश्यामृतꣳ हुतमुदानमन्नेनाप्यायस्व । समाने निविश्यामृतꣳ हुतꣳ समान-

---

**अप्रदाहाय** अप्रदाहार्थं शरीरस्य । इतरथा जाठरो वह्निः शरीरं दहेत् । गतमन्यत् ॥

इति याज्ञिक्युपनिषदि चतुस्त्रिंशोऽनुवाकः.

---

[1]अभिचारयति—**अमृतापिधानमसीति** ॥ **अपिधानं** छादनं येनामृतं पिधीयते तत्त्वमसि हे उदक ! ॥

इति याज्ञिक्युपनिषदि पञ्चत्रिंशोऽनुवाकः.

---

[1]**श्रद्धायामिति** ॥ हुताशनानुमन्त्रणमन्त्रः गतप्रायः । **श्रद्धायां** सत्यामेव श्रद्धावतैव मया **प्राणे निविश्य** अमृतं हविः हुतम् । तस्मात् **प्राणं** मदीयां प्राणवृत्तिं अनेन **अन्नेन आप्यायस्व** वर्धय

**मन्नेनाप्यायस्व । ब्रह्मणि म आत्माऽमृतत्वाय ॥ ५१ ॥ ३६ ॥**

[1]**प्राणानां ग्रन्थिरसि रुद्रो माऽऽविशान्तकस्ते-नान्नेनाप्यायस्व ॥ ५२ ॥ ३७ ॥**

[1]**अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः । ईश-**

---

हे प्राणात्मन् ! । अन्तर्भावितणय्र्थः प्यायतिर्द्रष्टव्यः । श्रद्धायामिति अपानादिषु अनुषज्यते । गतमन्यत् ॥

इति याज्ञिक्युपनिषदि षट्त्रिंशोऽनुवाकः.

---

[1]प्राणानामिति हृदयाभिमर्शनम् ॥ हे जाठराग्ने । **प्राणानां ग्रन्थिः** प्राणा येन ग्रन्थ्यन्ते निश्चलास्स्थाप्यन्ते तादृशस्त्वं **असि** त्वया हि भुक्ते जीर्णे प्राणाः तिष्ठन्ति । तस्मात् स त्वं प्राणधृत्यर्थं भुक्तं दग्धुं **रुद्रो मामाविश** यो रुद्रो रोदयिता **अन्तकः** महार्थसंहारी महाग्निरेव भूत्वा **मामाविश** आविश्य च **तेनान्नेन** प्राणेभ्यो हुतेनाप्यायस्व ॥

इति याज्ञिक्युपनिषदि सप्तत्रिंशोऽनुवाकः.

---

[1]दक्षिणाङ्गुष्ठे पाणिजलं स्रावयति—**अङ्गुष्ठेत्यनुष्टुभा** ॥ **अङ्गुष्ठमात्रः** अङ्गुष्ठप्रमाणः ईश्वरः अनवच्छिन्नोपि अङ्गुष्ठप्रमाणहृदयदे-

**स्सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक् ॥५३॥ ३८ ॥**

**[1]मेधा देवी जुषमाणा न आगाद्विश्वाची भद्रा सुमनस्यमाना। त्वया जुष्टा जुषमाणा दुरुक्तान्बृह-**

---

शोपलम्भात् तद्देशेनाङ्गुष्ठमात्र उच्यते । तदेवाह—**पुरुषः** पुरि शेते सीदति वा पुरुषः **अङ्गुष्ठं च समाश्रितः** यत्रोदकं स्राव्यति । अण्डमूलभूते हि भुवने कालाग्न्यात्मा देवस्तिष्ठति येनोत्थितेन कल्पान्ते विश्वं जगद्दह्यते । एवं शरीरमूले अङ्गुष्ठे स तिष्ठति येनोत्थापितेन शरीरं शोधयन्ति साधकाः । स **सर्वस्य जगतः प्रभुः** ईशः **प्रीणाति विश्वभुक्** कल्पान्ते विश्वस्य भोक्ता । यद्वा—यदस्मदादिना भुज्यते तदपि स एव भुङ्क्ते स देवः मदीयेन भुक्तेन प्रीणातु तृप्यतु ॥

इति याज्ञिक्युपनिषदि अष्टत्रिंशोऽनुवाकः.

---

[1]मेधाकामो जुहोति जपति वा—**मेधा देवीति** ॥ द्वे त्रिष्टुभौ । ग्रन्थधारणसमर्था बुद्धिः मेधा सा **मेधा देवी जुषमाणा** प्रीयमाणा **नः** अस्मान् **आगात्** एतु आगच्छतु । **विश्वाची** विश्वं वेद्यं अञ्चन्ती व्याप्नुवन्ती **भद्रा** कल्याणहेतुः **सुमनस्यमाना** सानुग्रहमना भवन्ती । इदानीं प्रत्यक्षवदाह—हे देवि! **त्वया** आगतया **जुष्टाः** सेविता वयं अत एव **विदथे** वि-

**द्वदेम विदथे सुवीराः । [2]त्वया जुष्ट ऋषिर्भवति देवि त्वया ब्रह्मा गतश्रीरुत त्वया । त्वया जुष्टश्चित्रं विन्दते वसु सा नो जुषस्व द्रविणेन मेधे ॥५४॥३९॥**

---

ज्ञाने प्रशस्ते सति **सुवीराः** शोभनपुत्रपौत्रादिकाश्च तत्सम्बन्धेन सन्तः **बृहत्** उच्छ्रितं सर्ववक्त्रतिशयसर्वशक्तिशोभितं **वदेम** वदितुं शक्ता भूयास्म । कीदृशा वयमिति चेत्—तवागमनात् प्राक् **दुरुक्तान्** सूक्तिरहितान् दुष्टान् शब्दान् वीरांश्च दुष्टान् **जुषमाणाः** सेवमानाः । ताच्छीलिकश्चानश् । पूर्वं त्वद्विरहात् मूकप्रायाः तच्छीला वयं इदानीं त्वया जुष्टा बृहद्वदेमेति ॥

[2]त्वयेति ॥ देव्यन्तः प्रथमः पादः । हे **देवि**! **त्वया जुष्टः** सेवितः जनः **ऋषिः** द्रष्टा **भवति**। मन्त्रदृग्वा भवति । किंच—**त्वया जुष्टो ब्रह्मा** ब्राह्मणो भवतीति यावत् । सांहितिकं दीर्घत्वम् । यद्वा—त्वया जुष्टो ब्रह्मा भवति ब्रह्मत्वं लभते । अमन्त्रविषयत्वादाद्युदात्तत्वं दुर्लभम् । **उत** अपि च **त्वया** जुष्टः **गतश्रीः** प्राप्तश्रीः भवति शुश्रुवान् ग्रामणी राजन्यो वा । तथा **त्वया जुष्टः चित्रं** चायनीयं **वसु** धनं **विन्दते** लभते । हे **मेधे**! **सा** तादृशी त्वं **नः** अस्मान् **द्रविणेन** प्रशस्तेन धनेन अस्मभ्यं देयेन सहास्मान् **जुषस्व** ॥

इति याज्ञिक्युपनिषदि एकोनचत्वारिंशोऽनुवाकः.

[1]मेधां म इन्द्रो ददातु मेधां देवी सरस्वती। मेधां मे अश्विनावुभा वाधत्तां पुष्करस्रजा ॥५५॥ ४०॥

[1]अप्सरासु या मेधा गन्धर्वेषु च यन्मनः। दैवी मेधा मनुष्यजा सा मां मेधा सुरभिर्जुषताम् ॥ ५६॥ ४१ ॥

[1]आ मां मेधा सुरभिर्विश्वरूपा हिरण्यवर्णा ज-

---

[1]मेधां म इत्यनुष्टुप् ॥ मे मह्यं इद्रो मेधां ददातु । अश्विनौ चोभौ मे मेधां आधत्तां उत्पादयताम् । किंविशिष्टौ पुष्करस्रजौ सरोजमालाप्रालम्बौ ॥

इति याज्ञिक्युपनिषदि चत्वारिंशोऽनुवाकः.

---

[1]अप्सरासु इत्यनुष्टुप् ॥ छान्दसोऽन्त्यलोपः । अप्सरस्सु या मेधा वर्तते गन्धर्वेषु च यन्मनः मननसामर्थ्यवती या मेधा वर्तते मनुष्यजाता च या मेधा दैवी द्योतमाना तिष्ठति सा मेधा मां जुषतां सेवतां सुरभिः शोभनगन्धा शोभन* ख्यातिः ॥

इति याज्ञिक्युपनिषदि एकचत्वारिंशोऽनुवाकः.

---

[1]आ मामिति त्रिष्टुप् ॥ आजगम्या भृशमागच्छतु मां सुरभिः मेधा। यङ्लुगन्तात् लुङि वा णिलोपे 'विभाषा' इति निघाता-

---

*शोभना.

**गती जगम्या । ऊर्जस्वती पयसा पिन्वमाना सा मां मेधा सुप्रतीका जुषताम् ॥ ५७ ॥ ४२ ॥**

[1]**सद्योजातं प्रपद्यामि सद्योजाताय वै नमः ।**

---

भावः, अन्त्यलोपश्छान्दसः । **विश्वरूपा** विश्वार्थमूर्तिकुशला **हिरण्यवर्णा** हिरण्यगर्भवर्णा प्रकाशमानाक्षरा हितरमणीयस्वभावा वा **जगती** अविच्छेदेन वर्तमाना जगत्यावर्तमाना । यङ्लुगन्तात् ङीप् । आगत्य च **सा मेधा मां जुषतां** सदा सेवतां मय्येव तिष्ठतु । **ऊर्जस्वती** रसवती **पयसा** क्षीरादिना मां **पिन्वमाना** सिञ्चन्ती गवादिसमृद्ध्या **सुप्रतीका** शोभनोपक्रमा ईदृशी भूत्वा सदा मां जुषताम् ॥

इति याज्ञिक्युपनिषदि द्विचत्वारिंशोऽनुवाकः.

---

[1]अथ पञ्चब्रह्माख्याः पञ्चानुवाकाः ईश्वराराधनादिषु उपासनादिषु च विनियुक्ताः । सद्योजातं इति परोष्णिक् त्रिपदा मामन्ता । शिष्टं यजुः । पथ्याबृहती वा चतुष्पदा । तत्पुरुषायेति गायत्री । ईशान इति पथ्याबृहती, आस्तारपङ्क्तिर्वा । एते च सर्वविद्यादेहस्य सद्योजातादिनामानि पञ्चविद्यास्रोतःप्रवर्तकतदीयपञ्चमुखभूतानि पञ्चब्रह्माणि यैर्व्याप्तः समस्तो मन्त्राध्यायः ॥ **सद्योजातं** यत्क्षणे सिसृक्षा देवस्य तदानीमेवाविर्भूतं प्रपञ्चोन्मेषहेतुं देवं त्वां **प्रपद्यामि** प्रपद्ये भजे । तस्मै तुभ्यं **सद्योजाताय वै नमः** प्रसादनार्थं प्रणिपातं कुर्मः । इदानीं स्वाभिम-

**भवेभवे नातिभवे भजस्व मां भवोद्भवाय नमः ॥ ५८ ॥ ४३ ॥**

**[1]वामदेवाय नमो ज्येष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय न-**

---

तं प्रार्थयते—हे देव! **भवेभवे न** भवेभवे इव यथा मां त्वं संसारे निमित्ते भजसे संसारित्वेन प्रवर्तयसि त्वं हि सर्वान् संसारयसि तथा **मां अतिभवे भजस्व** भवमतिक्रान्तोपवर्गः अतिभवः तत्र मां भजस्व तन्निमित्तं मां स्वीकुरु अनुगृहाण । त्वं हि प्रत्यग्वृत्तिर्भवं प्रवर्तयसि, प्राग्वृत्तिः सदाशिवात्मना स्थितोपवर्गं ददासि। तस्मै **भवोद्भवाय नमः** भवस्य उद्भावयित्रे तुभ्यं नमः । अतः परं अलं भवोद्भवायेति भावः ॥

इति याज्ञिक्युपनिषदि त्रिचत्वारिंशोऽनुवाकः.

---

[1]वामदेवायेति ॥ वामदेवादयो न विद्याशरीराः चितिशक्तेः तत्तन्नाम्नीभिः शक्तिभिः सहिताः । तद्व्यूहात्मकं द्वितीयं ब्रह्मात्र प्रतिपाद्यम् । वामदेवप्राधान्याच्च न्यासादौ तेन समुदायस्याख्यानम्। तत्रेच्छाज्ञानक्रियाशक्तिक्षोभकाः आद्यास्त्रयः । **कालः** कलयिता कुण्डलाख्यायाः विकृतेः अव्यक्तविकृतिविशेषाया जनयिता । **कलविकरणः** । कलयतीति कलः अव्यक्तविकारविशेषावस्था यद्वत्कलिलमुच्यते । तस्य विकरणः विकर्ता विकारविशेषाणां कर्ता । 'कृत्यल्युटो बहुलम्' इति कर्तरि ल्युट् । यद्वा—कर्मणि ल्युटि

मो बलंप्रमथनाय नमस्सर्वंभूतदमनाय नमो म-
नोन्मंनाय नमः ॥ ५९ ॥ ४४ ॥

[1]अघोरेभ्योऽथ घोरेभ्यो घोरघोरंतरेभ्यस्सर्वतं-
श्शर्व सर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥६०॥४५

---

बहुभिः कलो विकरणो यस्य सः । पूर्वपदप्रकृतिस्वरश्चोपपन्नो भवति । कलशब्दः पचाद्यचि वृषादिर्द्रष्टव्यः । एवमुत्तरेऽपि बहुव्रीहित्वेन नेतव्याः । **बलविकरणाय नमः** बलविकरणो बलवैचित्र्यकारी । **बलप्रमथनः** बलानां प्रकर्षेण लोळयिता परिपाचयिता । **सर्वभूतदमनः** सर्वेषां भूतानां दमयिता नियन्ता बलविशेषपर्यवसितस्वभावहेतुभूतानाम् । **मनोन्मनः** मन्ता जीवः मनः तस्योन्मानयिता उद्बोधकः चैतन्योद्दीपकः । एतेभ्यो **नमः** ॥

इति याज्ञिक्युपनिषदि चतुश्चत्वारिंशोऽनुवाकः.

---

[1]अघोरेभ्य इति ॥ अत्रापि रुद्रसमष्ट्यात्मकं ब्रह्म प्रतिपाद्यम् । अघोरप्राधान्याच्च तेन समुदायव्यपदेशः । **अघोरेभ्यः** शान्तेभ्यः । स्वरान्यत्वं छान्दसम् । **घोरेभ्यः** उग्रेभ्यः **घोरघोरतरेभ्यः** घोरेभ्योपि घोरतरेभ्यः त्वत्तोपि घोरतरेभ्यः **सर्वेभ्यो रुद्ररूपेभ्यः** रुद्रतुल्यरूपेभ्यः हे **शर्व**! ते त्वदीयेभ्यः अंशेभ्यः **सर्वतः** सर्वप्रकारं शिरसा वचसा मनसा च **नमोस्तु** ॥

इति पञ्चचत्वारिंशोऽनुवाकः ॥

[1]तत्पु॑रु॑षाय वि॒द्महे॑ महादे॒वाय॑ धीमहि । तन्नो॑ रुद्रः प्रचो॒दया॑त् ॥ ६१ ॥ ४६ ॥

[1]ईशा॑नस्सर्ववि॑द्या॒ना॒मीश्व॑रस्सर्व॑भू॒ता॒नां॒ ब्रह्माऽधि॑पति॒र्ब्रह्म॒णोऽधि॑पति॒र्ब्रह्मा॑ शि॒वो मे॑ अस्तु सदाशि॒वोम् ॥ ६२ ॥ ४७ ॥

---

[1]तत्पुरुषायेति व्याख्यातं "अम्भस्यपारे" इत्यत्र* । अत्रापि पुरुषेश्वर [1]रुद्रव्यापको देवांशः कश्चित्प्रतिपाद्यः । आद्यं पदद्वयं तस्य नाम॥

इति षट्चत्वारिंशोऽनुवाकः ॥

---

[1]ईशान इत्यादि ॥ **सर्वविद्यानां ईशानः** सर्वविद्याशरीरत्वात् । **सर्वभूतानां ईश्वरः** सृष्ट्यादिशक्तः **ब्रह्मा** सर्वात्मना परिवृढः **अधिपतिः** अधिकं पालयिता सर्वस्य । **ब्रह्मणोऽधिपतिः** ब्रह्मणोऽप्यधिपतिः, उपलक्षणत्वात् जगत्पतीनामपि पतिः **ब्रह्मा** विश्वाधिकं परं वस्तु तस्य विद्याशरीरत्वात् तदेव स्वयम् । छान्दसं सांहितिकं दीर्घत्वम् । आद्युदात्तत्वं चोपपद्यते । स तादृशो देवः **सदाशिवाख्यः** प्रणवात्मा शब्दब्रह्मात्मकत्वात् **मे शिवोऽस्तु** शिवं करोतु । सस्थाने प्रणवः । यद्वा—यलोपासिद्धिमनाश्रित्य 'ओमाङोश्च' इति पररूपत्वं कृतम् ॥

इति सप्तचत्वारिंशोऽनुवाकः ॥

---

*अत्रैव १-२५.　　[1]पुरुषेश्वरः.

[1]ब्रह्म मेतु माम् । मधु मेतु माम् । ब्रह्ममेव मधु

[1]अज्ञातप्रज्ञातसमस्तपापक्षयार्थं जप्याः त्रिसुपर्णाख्याः त्रयोऽनुवाकाः । पर्णं पतत्रं शोभनपर्णः सुपर्णः पक्षिराजः तत्तुल्याः सुपर्णाः परस्य श्रेयसः सुष्ठु पालयितारः । यद्वा—प्रणवः शकुन्तः सुपर्णः शोभनपतनः येन उत्पततामूर्ध्वं नीयमान आत्मा ब्रह्माधिगच्छति । यथाऽऽहुः—'ओङ्कारं रथमारुह्य' इति । तत्प्रधानत्वात् अनुवाका अपि सुपर्णाः । प्रणवप्राधान्यमेषां दर्शयितुं त्रयाणामनुवाकानां प्रणवान्तत्वम् । त्रिसुपर्णमिति । "दिक्संख्ये संज्ञायां" इति समासः सप्तर्षिवत् प्रत्येकं त्रिसुपर्णाः । तत्र प्रथमः—ब्रह्म मेतु इत्यादि ॥ **ब्रह्म** परं **मां मेतु** प्राप्नोतु एकीभावेन मां मनस्विनं[1] करोतु । मी गतौ चुरादिराधृषीयः । 'बहुलं छन्दसि' इति शपो लुक् । केचित्तु—"मध्यान्नीचादुच्चा"* इतिवत् छान्दसो मकारोपजन इत्याहुः । उप [तच्चिन्त्यं उप] जनानामावृत्त्यदर्शनात् । किञ्च—सति संभवे मात्रयाऽपि निरर्थिकया भवितुमयुक्तम् । अथ **मां मेतु** मह्यमात्मानमाविष्करोतु मननात् **मधु** । मदनाद्वा परानन्दभूतः परमात्मा मधु । तत्प्रादुर्भावात्तेनानन्देनानन्दी नित्यतृप्तः स्याम् । यद्वा—परविद्या मधु मननरूपत्वात् । तृप्तिहेतुत्वाद्वा यया परमक्षरमधिगम्यते सा मधुस्थानीया परा विद्या[2] मां प्राप्नोतु अङ्गीकृत्य ज्ञानं प्रयच्छतु तस्य विद्यानां प्रदातृत्वात् । ततस्तद्विद्योतितविद्य आविर्भूतपरमानन्दः ब्रह्मीभूतस्तिष्ठामिति ॥†

[1]यशस्विनं. [2]परविद्या. *सं. २-३-१४.

†अत्र ब्रह्ममेवेति वाक्यस्य व्याख्या न क्वचिदपि कोशे दृश्यते । परं तु 'ब्रह्म च मधु च अकारवाच्यं तत्त्वं मां मेतु' इति व्याख्या स्यादिति उत्तरानुवाकद्वयभाष्यदर्शनेनोन्नीयते ॥

**मेतु माम्। [2]यास्ते सोम प्रजा वत्सोऽभि सो अहम्। दुस्स्वप्नहन्दुरुष्वहा। यास्ते सोम प्राणाꣳ स्ताञ्जुहो-**

[2]अथ अमुमेवार्थं मन्त्रान्तरेण स्पष्टयति—यास्त इत्यनुष्टुप् ॥ इयं इदानीं परां देवतां प्रति प्रत्यक्षवदाह—हे **सोम**! ईश्वर! । षु प्रसवैश्वर्ययोः सौति ई ष्टे सर्वस्येति सोमः । यद्वा—प्रसौति अनुजानाति विश्वमिति विश्वस्य प्रेरयिता देवस्सोमः सोमेनाराधनीये [1]वा सोमः । तद्वदर्थात्ताच्छब्द्यम् । यद्वा—उमया परशक्त्या विपर्यस्ताक्षरया प्रणववाच्यया सहितः प्रणववाच्यः सोमः । हे **सोम! यास्ते** तव **प्रजा** ब्राह्मण्यः । यथा त्वं देवेषु ब्राह्मणोसि तव ब्राह्मणत्वात् [2]तव स्वभूताः सर्वा ब्राह्मण्यः प्रजाः । यद्वा—"सोम एव नो राजेत्याहुर्ब्राह्मणीः प्रजाः"* इति ब्राह्मण्यः प्रजाः सोमस्य स्वभूताः सोमस्तासां स्वामी । ताः प्रजा **अभिलक्ष्य वत्सः** वत्सस्थानीयः श्रेयसां दोग्धा । यद्वा—तासां मध्ये बाल एव सन् इदानीं **सोऽहं दुरुष्वहा** दुरुत्सहस्संजातः ज्ञानलाभेन अनभिभवनीयः संपन्नोऽस्मि । पृषोदरादिः । यद्वा—सौतेः कर्तरि विचि 'सुपां सुलुक्' इति विभक्तेर्लुकि सो इति भवति । तासां मध्ये अहमभिसो अभितः सर्वतः सोता ईशिताऽस्मि ज्ञानलाभेन । स्वरश्चोपपन्नो भवति । त्वं सोमः अहं सोः सवनकर्तृत्वं यदीशितृत्वं तदावयोः तुल्यमभूत्, एकत्वलाभात् । यद्वा—अभिसो अभिषोता सोमेन त्वाराधयिता । षत्वं तु प्राप्नोति । यद्वा—जुष्टा उषाः संसारसंबन्धिन्यः दुस्स्वप्नबहुक्लेशाः महामोहदशात्मि-

[1]सोमेनाबाधनीयो. [2]तव ब्रह्मत्वात्. *एकाग्नि २-११-१३.

मि । [3]त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात् । ब्रह्महत्यां वा एते घ्नन्ति । ये ब्राह्मणास्त्रिसुपर्णं पठन्ति ।

---

का रात्रयः तासां हन्ता नाशयिता परमव्युष्ट्या शमनात् । तत्र हेतुमाह—**दुस्स्वप्नहन्** ! वैचित्र्यं स्वप्नः दुष्स्वप्नः परमवैचित्र्यं महामोहः हे तस्य हन्तः! नाशयितः! मोहापगमे सदा व्युष्टत्वात् दृष्टोष्ण[1]विनाशः । यदाहुः—

**या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।**
**यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥** इति ॥

अथ यदा मे ईदृशी व्युष्टिरासीत् तदा अहं हे **सोम! यास्ते** तव प्रजा इत्येव तव प्रजा याः प्राणभूताः तव स्वभूताः "प्राणानां ग्रन्थिरसि"* इति **तान् प्राणान् जुहोमि** । आददे प्रत्याहरामि विषयेभ्यः[2] । यद्वा—आत्मज्योतिषि प्रक्षिपामि तत आत्मप्रतिष्ठ उपलब्धपरानन्दो ब्रह्मीभूय तिष्ठामीति ॥

[3]त्रिसुपर्णमित्यादि ॥ अत्रैव ब्राह्मणम् । विशेषावचनेऽपि प्राथम्यादस्यैव ग्रहणम् । आद्यमेतत् **त्रिसुपर्णं अयाचितं** उपासनादि यत्तत्पूर्वमप्रार्थितमेव स्वयमभ्युद्यतं **ब्राह्मणाय दद्यात्** उपदिशेत् । अथ **एते** सर्वे एवं विद्वान् यो ददाति ते सर्वेऽपि **ब्रह्महत्यां** ब्राह्मणवधात्मकमपि पापं **घ्नन्ति** नाशयन्ति किं पुनरुपासितार इति भावः । अथ **ये ब्राह्मणा** लब्धत्रिसुपर्णाः **पठन्ति** तेऽपि **सोमं** परं देवं सोमयागफलं वा **प्राप्नुवन्ति**

---

[1]दृष्टोष्णा, द्रष्टोष्णा, [2]इष्टविषयेभ्यः. *अत्रैव. ३७-१.

ते सोमं प्राप्नुवन्ति । आसहस्रात्पङ्क्तिं पुनन्ति । ओम् ॥ ६३ ॥ ४८ ॥

[1]ब्रह्म मेधया । मधु मेधया । ब्रह्ममेव मधु मेधया । [2]अद्या नो देव सवितः प्रजावत्सावीस्सौभगम् । परा दुष्ष्वप्नियꣳ सुव । विश्वानि देव सवितर्दुरितानि परासुव । यद्भद्रं तन्म आसुव । [3]मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नस्सन्त्वोषधीः । मधु नक्तमुतोषसि मधुमत्पार्थिवꣳ

---

अथ सहस्रपुरुषायां ब्राह्मणपङ्क्तौ श्राद्धादिषु भुञ्जानाः तां सर्वामपि पङ्क्तिं पुनन्ति क्षालितसर्वपापां भोजयितव्यां कुर्वन्ति । ओमिति प्रणवसायुज्यं च लभन्ते ॥

इति अष्टाचत्वारिंशोऽनुवाकः.

---

[1]ब्रह्म मेधयेति द्वितीयः त्रिसुपर्णः प्रथमेन गतप्रायः ॥ पूर्वोक्तं ब्रह्म च मधु च तदुभयात्मकं अकारवाच्यं* च तत्त्वं मेधया मेधाविशेषेण प्राप्यते ज्ञायते वा ॥

[2]अथ तादृशीं मेधां प्रार्थयते—अद्या न इति द्वे गायत्र्यौ "उत नः प्रिया" इत्यत्र व्याख्याते ॥† सौभगं सुभगत्वं सुज्ञातत्वं भद्रमपि तदेव ॥

---

* उकारवाच्यमिति स्यात्.	† ब्रा. २-४-६

रजः ॥ ६४ ॥ मधु द्यौरस्तु नः पिता । मधुमान्नो वनस्पतिर्मधुमाꣳ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः । [4]य इमं त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात्। भ्रूणहत्यां वा एते घ्नन्ति । ये ब्राह्मणास्त्रिसुपर्णं पठन्ति । ते सोमं प्राप्नुवन्ति । आसहस्रात्पङ्क्तिं पुनन्ति । ओम् ॥ ६५ ॥

रजो नव च ॥४९॥

[1]ब्रह्म मेधवा । मधु मेधवा । ब्रह्ममेव मधु मेध-

---

[3]अथ मधु वाता ऋतायत इति तिस्रो गायत्र्यः व्याख्याताः ॥* अत्राध्यात्मज्ञानं मधु ॥

[4]य इमं इत्यादि ब्राह्मणम् ॥ गतम् । य इममिति द्वितीयं निर्दिशति । भ्रूणहत्यां वेदवेदाङ्गविदो ब्राह्मणस्य वधः ॥

इति एकोनपञ्चाशोऽनुवाकः.

[1]ब्रह्म मेधवेति तृतीयं त्रिसुपर्णम् ॥ सर्वं पूर्ववत् । तत्र प्रथमे उपासना परप्राप्तिहेतुरुक्ता । द्वितीये ज्ञानम् । इदानीं कर्मणः परप्राप्तिसाधनत्वमुच्यते । पूर्वोक्तं **ब्रह्म** च मधु च तदुभयात्मकं च मकारवाच्यं तृतीयं तत्त्वं तत्सर्वं **मेधवा** मेधवत्

---

*अत्रैव. १०. 11—13

वां । [2]ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् । श्येनो गृध्राणाꣳ स्वधितिर्वनानाꣳ सोमः पवित्रमत्येति रेभन्न् । [3]हꣳसश्शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् । [4]य इमं त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात् । वीरहत्यां वा एते घ्नन्ति । ये ब्राह्मणास्त्रिसुपर्णं पठन्ति । ते सोमं प्राप्नुवन्ति । आ-

---

मेधो यज्ञो ज्योतिष्टोमादिः तद्वत् तदनुष्ठानेन प्राप्यते ज्ञायते वा न विना कर्मणा । वत्वन्तात् 'सुपां सुलुक्' इति डादेशः॥

[2]इदानीं कर्मवैशिष्ट्यं दर्शयति—ब्रह्मा देवानामिति त्रिष्टुप् व्याख्याता "त्वमग्ने बृहद्वयः" इत्यत्र* ॥ सोमयागः सर्वं पवित्रमतिशेत इति ॥

[3]हंसश्शुचिषदिति अतिजगती व्याख्याता इन्द्रस्येत्यत्र† ॥ इत्थं कर्मसिद्ध्यर्थं देवो बहुषु स्थानेषु बहुरूपस्तिष्ठतीति ॥

[4]य इमं इत्यादि ब्राह्मणं गतम् ॥ इदं तृतीयमाह—वीरहत्यामिति विशेषः । गुणवान् पुत्रो वीरः । अभिषिक्तः क्ष-

---

*सं. ३-४-११.　　　　†सं. १-८-१५.

सहस्रात्पङ्क्तिं पुनन्ति । ओम् ॥ ६६ ॥ ५० ॥

[1]प्राणापानव्यानोदानसमाना मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा ॥६७॥५१॥

[1]वाङ्मनश्चक्षुश्श्रोत्रजिह्वाघ्राणरेतोबुद्ध्याकूतिसङ्कल्पा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा ॥ ६८ ॥ ५२ ॥

---

त्रिय इत्यन्ये । तस्य वधो **वीरहत्या** । गतमन्यत् ॥

इति पञ्चाशोऽनुवाकः.

---

[1]अथ संन्यासविषया विरजाहोमाः एकपञ्चाशप्रभृतयः एकादशानुवाकाः ॥ मे मदीयाः **प्राणादयः** पञ्चापि वायवः वायुवृत्तयः **शुद्धयन्ताम्** । ततः **अहं** परं **ज्योतिः** भूत्वा **विरजाः** विरजस्कः प्रवर्तक[1]रहितः **विपाप्मा** विगतत्रिविधमलश्च **भूयासम्** । अनेन होमेन **स्वाहा** हुतं चेदमस्तु परस्मै ज्योतिषे॥

इति एकपञ्चाशोऽनुवाकः.

---

[1]वागादिसङ्कल्पान्तज्ञानसाधनदशकशुद्धिः द्विपञ्चाशे ॥ **आकूतिः** अभिप्रायः ॥

इति द्विपञ्चाशोऽनुवाकः.

---

[1]प्रावारक.

[1]शिरःपाणिपादपार्श्वपृष्ठोदरजङ्घशिश्नोपस्थपायवो मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा ॥ ६९ ॥ ५३ ॥

[1]त्वक्चर्ममाꣳसरुधिरमेदोऽस्थिमज्जा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा ॥ ७० ॥ ५४ ॥

[1]शब्दस्पर्शरूपरसगन्धा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा॥७१॥५५॥

---

[1]शिरःप्रभृतिपाय्वन्तकर्मसाधनदशकशुद्धिः त्रिपञ्चाशे ॥ प्राण्यङ्गत्वेऽपि व्यत्ययेनैकवद्भावाभावः । पाय्वादीनामिन्द्रियात्मकत्वाद्वा ॥

इति त्रिपञ्चाशोऽनुवाकः.

---

[1]त्वगादिमज्जान्तसप्तधातुशुद्धिः चतुःपञ्चाशे ॥ मज्जशब्दात् 'सुपां सुलुक्' इति डादेशः ॥

इति चतुःपञ्चाशोऽनुवाकः.

---

[1]शब्दादिगन्धान्तपञ्चविषयशुद्धिः पञ्चपञ्चाशे ॥

इति पञ्चपञ्चाशोऽनुवाकः.

[1]पृथिव्यप्तेजोवाय्वाकाशा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा॥७२॥५६

[1]अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा ॥ ७३ ॥ ५७ ॥

[1]विविट्टि स्वाहा ॥ ७४ ॥ ५८ ॥

---

[1]पृथिव्याद्याकाशान्तपञ्चभूतशुद्धिः षट्पञ्चाशे ॥

इति षट्पञ्चाशोऽनुवाकः.

[1]अन्नमयाद्यानन्दमयान्तपञ्चकोशशुद्धिः सप्तपञ्चाशे ॥ 'ब्रह्मविदाप्नोति'* इत्यत्र व्याकृता ॥

इति सप्तपञ्चाशोऽनुवाकः.

[1]विविट्टि स्वाहेति ॥ हे आत्मन्! विविट्टि व्याप्नुहि विश्वं विष्णुरिवेति भावः। विष्लृ व्याप्तौ, मध्यमपुरुषे शपश्श्लौ हेर्धिभावे ष्टुत्वे 'निजां त्रयाणाम्' इति गुणे वेविड्ढीति वक्तव्ये परोक्षत्वाय विकृतः प्रयुक्तः । व्यपगतपञ्चकोशोऽसंकुचिताविर्भूतपरप्रकाशो व्यापी भूत्वा परं ब्रह्माप्नुहि । स्वाहा हुतं चेदमस्तु तुभ्यं वेविक्षते ॥

इति अष्टपञ्चाशोऽनुवाकः.

---

*अत्रैव(३२)पत्रे.

[1]घर्षोत्काय स्वाहा ॥ ७५ ॥ ५९ ॥

उत्तिष्ठ पुरुष हरे लोहितपिङ्गळाक्षि देहिदेहि ददापयिता मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासङ्ं स्वाहा ॥ ७६ ॥ ६० ॥

---

[1]घर्षोत्काय स्वाहेति ॥ घस्लृ अदने, पचाद्यच् । घसाः घस्मराः त्रैलोक्योपसंहरणशीलाः उत्का उल्का यस्य सः घसोल्कः इति प्राप्ते परोक्षत्वाय षत्वतत्वे कृते । यद्वा—घसनं घसः तत्रोत्काय उत्सुकाय स्वात्मनि विश्वानि भूतानि जुषते परस्मै देवाय स्वाहुतं हविरिदमस्तु यं अहमीप्सामीति ॥

इति एकोनषष्टितमोऽनुवाकः.

---

[1]उत्तिष्ठेति ॥ हे पुरुष! पुरि शयान! उत्तिष्ठ न संकुचितेनासितव्यं वैश्वरूप्यं भज । अथेदानीमिदं प्रार्थये—हरे हरणशीले अहश्च रात्रिश्च लोहितपिङ्गलाक्षि । लोहितस्सूर्यः पिङ्गलोऽग्निः तावक्षिस्थानीयौ ययोः ते लोहितपिङ्गलाक्ष्यौ । लोहिताक्षमहः । पिङ्गाक्षी रात्रिः । 'वाम्शसोः' इति पूर्वसवर्णदीर्घत्वे छान्दसं ह्रस्वत्वम् । देहिदेहीति ददापयिता उपलक्षणत्वात् कुरुष्वकुरुष्वेति कारयिता सर्वप्रवृत्तिहेतुर्महान् । एतेऽपि शुद्ध्यन्ताम् । 'क्रियासमभिहारे लोट्' 'यथाविध्यनुप्रयोगः' इति ददातेर्लोडन्तस्यानुप्रयोगः । अत्र दानस्य क्रियासमभिहारः न तु दापनायाः तेन दापयदापय इति नोक्तम् ॥

इति षष्टितमोऽनुवाकः ॥

[1]ओ३ँ स्वाहा ॥ ७७ ॥ ६१ ॥

[1]सत्यं परं पर३ँ सत्य३ँ सत्येन न सुवर्गाल्लो-काच्चयवन्ते कदाचन सता३ँ हि सत्यं तस्मात्सत्ये रमन्ते [2]तप इति तपो नानशनात्परं यद्धि परं तप-

[1]ओं स्वाहेति ॥ लोकत्रयव्यापिने ओमात्मने स्वाहा स्वाहुत-मिदमस्तु ॥

इति एकषष्टितमोऽनुवाकः ॥

[1]सत्यं परमिति ॥ संन्यासविधिः । सत्यादितपोव्युदासेन संन्या-साख्यस्य तपसः प्रकृष्टत्वं प्रतिपादयति । संविदविचलनं सत्यं वाचोपि संविन्मूलत्वात् तदेव परं प्रकृष्टं तपः । कुत एतत् "तानि वा एतान्यवराणि तपांसि"* इति वक्ष्यमाणत्वात् । कुतोऽस्य पर-त्वमित्यत आह—परं सर्वेभ्यः [1]उद्गतं सत्यफलम् । फलेऽपि सत्य-शब्दो वर्तते तत्प्राप्यत्वात् ताच्छब्द्यम् । कुत इत्यत आह— सत्येन हि कदाचन सुवर्गाल्लोकान्न च्यवन्ते । किञ्च—सतां हि सत्यमेवास्ति नेतरत् । तस्मात्सत्ये रमन्ते श्रेयोर्थिनः सर्वे । आहुश्च—

अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेवातिरिच्यते ॥ †इति ॥

[2]तप इति यत्प्रसिद्धं यमनियमादिकं तदेव परं तप इति पक्षा-न्तरं इत्यर्थः । एवं सर्वत्र । कथं तपसः परत्वमित्याह—तप इति ॥

*अत्रैव. ६२-१२. †विष्णुध. ५७-७. [1]सर्वेभ्यः फलेभ्यः.

स्तद्दुर्धर्षं तद्दुराधर्षं तस्मात्तपसि रमन्ते [3]दम इति नियतं ब्रह्मचारिणस्तस्माद्दमे रमन्ते [4]शम इत्यरण्ये मुनयस्तस्माच्छमे रमन्ते [5]दानमिति सर्वाणि भूतानि प्रशꣳसन्ति दानान्नातिदुष्करं तस्माद्दाने रमन्ते [6]धर्म इति धर्मेण सर्वमिदं परिगृहीतं

---

अनशनेन क्लेशो लक्ष्यते । क्लेशात् परं अन्यत् तपो न अस्ति उपवासादिक्लेशरूपत्वात् तस्य । यद्धि परं यथोक्तलक्षणं तपः तद्दुर्धर्षं दुरभिभवं दुरनुष्ठानम् । किञ्च—तद्दुराधर्षं ईषदपि धर्षितुमशक्यम् । तस्मात्तपसि रमन्ते श्रेयोर्थिनः ॥

[3]दमः इन्द्रियसंयमः ब्रह्मचारिणो हि स नियतं तपः महाफलत्वात् अस्तु वा मा वाऽन्यत् तस्माद्दमे रमन्ते श्रेयोर्थिनः ॥

[4]शमः सर्वप्रवृत्त्युपरमः स परं तप इति अरण्ये मुनयो वसन्ति महाफलत्वात् तस्य । तस्माच्छमे रमन्ते सर्वेऽपि ॥

[5]दानं परस्वत्वापत्तिपर्यन्तो धनव्ययः तत्परं तपः महाफलत्वात् तद्धि सर्वाणि भूतानि तिर्यञ्चोपि प्रशंसन्ति प्रार्थयन्ते। दानात् हि परं अतिदुष्करं न अस्ति । प्रत्यक्षमेवैतत् प्राणभूतधनव्ययात्मकत्वात् । तस्माद्दाने शक्त्या श्रेयोर्थिनो रमन्ते ॥

[6]धर्मः नित्यकर्मादिः श्रौतः स्मार्तश्च । स परं तपः । तेन हि सर्वमिदं जगत् परिगृहीतं वशीकृतं धर्मवशवर्ति विश्वम् । तस्मा-

धर्मान्नातिदुश्चरं तस्माद्धर्मे रमन्ते [7]प्रजन इति भूयाꣳसस्तस्माद्भूयिष्ठाः प्रजायन्ते तस्माद्भूयिष्ठाः प्रजनने रमन्तेऽ[8]ग्नय इत्याह तस्मादग्नय आधातव्या अग्निहोत्रमित्याह तस्मादग्निहोत्रे रमन्ते [9]यज्ञ इति यज्ञो हि देवानां यज्ञेन हि देवा दिवं गता-

---

न्महानुभावात् अतोऽन्यत् दुश्चरं न अस्ति अलसैश्चरितुमशक्यत्वात् । तस्माद्धर्मे रमन्ते यतित्वाऽपि सर्वेऽपि ॥

[7]प्रजनः अपत्योत्पादनं प्रजोत्पत्तौ व्यापृतानां स एव परमं तपः। तच्च परमं तपः भूयांसः बहुतराः कुर्वन्ति । तस्मात् लोके भूयिष्ठाः प्रजायन्ते प्रजामुत्पादयन्ति तपस्त्वादधिकफलभाजो भवन्ति । तस्माद्भूयिष्ठाः प्रजनने गार्हस्थ्ये प्रजाश्रद्धया रमन्ते ॥

[8]अग्नयो गार्हपत्यादयः ते परमं तप इति श्रुतिराह—'पञ्च वा एते आत्मनिष्ठा आत्मानं क्षेमं नयन्ति' इति । तस्मादग्नय आधातव्याः सर्वैः । अग्निहोत्रं परमं तप इति श्रुतिः आह—'यावज्जीवमग्निहोत्रं जुहुयात्' इति । तस्मात् तत्र रमन्ते श्रेयोर्थिनः ॥

[9]यज्ञो ज्योतिष्टोमादिः स परमं तपः । यज्ञेन हीत्यादि स्पष्टम् ॥

**स्तस्माद्यज्ञे रमन्ते [10]मानसमिति विद्वाꣳसस्तस्माद्विद्वाꣳस एव मानसे रमन्ते [11]न्यास इति ब्रह्मा हि परः परो हि ब्रह्मा [12]तानि वा एतान्यवराणि**

---

[10]मानसमिति ॥ मनसि भवो विषयत्यागो **मानसं** वैराग्यं तदेव परं तपः । तद्धि **विद्वांसः** कुर्वन्ति । यद्वा—तदेव परं तप **इति विद्वांस** आहुः । **तस्मात्तत्र विद्वांस एव रमन्ते** नान्ये विद्वददभिमतत्वेन महाफलत्वात् । अतः 'त्यागेनैके अमृतत्वमानशुः'* इति दृश्वानः ततोऽन्यत्तपो नेच्छन्ति ॥

[11]न्यास इति ॥ सर्वकर्मफलत्यागो **न्यासः** स एव परमं तपः कुतः **ब्रह्मैव** स्वयं संन्यासः तस्य सर्वोपरिवर्तित्वात् । **ब्रह्मा हि** सर्वस्मात् परमः उपरि स्थितः । किञ्च—अन्यः **पर** उत्कृष्टश्च स एव **ब्रह्मा** न्यासः । यस्मादेवं न्यासः परब्रह्मस्थानीयः अन्योऽतिरिक्तः सत्यादीन्युक्तानि अवराणि तपांसि न्यूनफलानि अन्तवत्फलत्वात् तपांस्येव पुरुषहितत्वात् न्यासः प्रकृष्टः अविपर्ययात् तस्मात् ॥

[12]तानि वा इत्यादि वेदितुः प्रशंसा ॥ **तान्येतानि** सत्यादीनि **अवराण्यपि तपांसि न्यास एव** ज्ञायमानः अतिरेचयति आत्मनो व्यतिरिक्तफलानि करोति तस्य । **य एवं वेद** तस्य महात्मनः सत्यादिना न्यासस्य च प्रभावं यो वेद तस्य सं-

---

*अत्रैव (११८) पत्रे.

तपा॑ꣳसि न्या॒स ए॒वात्य॑रेचय॒द्य ए॒वं वेदेत्यु॒प॒नि- ष॑त् ॥ ७८ ॥ ६२ ॥

[1]प्रा॒जा॒प॒त्यो हारु॑णिस्सुप॒र्णेयः॑ प्र॒जाप॑तिं पि॒तर॒- मुप॑ससार॒ किं भ॑गव॒न्तः प॑र॒मं व॑द॒न्तीति॒ तस्मै॒ प्रो॑वाच स॒त्येन॑ वा॒युरावा॑ति स॒त्येना॑दि॒त्यो रो॑चते

---

न्यासादप्यतिरिक्तफलानि भवन्तीत्यर्थः । अतिरेकावधिप्रदत्वमेव तस्य कर्तृत्वम् । यद्वा—न्यासे सत्येव । यद्वा—पञ्चम्यर्थे सप्तमी। एवं विद्वान् एतानि न्यासादीन्यतिरेचयति । **इत्युपनिषत्** इति व्याख्यातम् ॥

इति याज्ञिक्युपनिषदि द्विषष्टितमोऽनुवाकः.

---

[1]प्राजापत्य इत्यादिना पूर्वानुवाकोक्तमेव विस्तरेण प्रतिपादय- ति—प्रजापतिररुणश्च पितरौ तयोरपत्यं द्विपितृकः कश्चि**दारुणि**- नामेति केचित् । सुपर्णाया मातुः पुत्रः । आदिवृद्ध्यभावश्छा- न्दसः । स **पितरमुपगतवान्** प्रष्टुं **किं भगवन्तः** प्रकृष्टज्ञा- नैश्वर्या ऋषयः **परमं** प्रकृष्टं तपो **वदन्ती**ति । एवं पृच्छन् उपगतवान् । **तस्मै प्रोवाच** पिता सत्यादीनि परमतपस्त्वेन प्रोक्तवान् । पुत्रेण नेदं परमं नेद परममिति पुनःपुनः प्रत्यु- क्तः पिता पुत्रसंप्रत्ययार्थं तत्तत्प्रभाववर्णनपूर्वकमेव सत्याद्यनुक्रमे- णेति **प्रोवाच** ॥

दिवि सत्यं वाचः प्रतिष्ठा सत्ये सर्वं प्रतिष्ठितं तस्मात्सत्यं परमं वदन्ति [3]तपसा देवा देवतामग्र आयन्तपसर्षयस्सुवरन्वविन्दन्तपसा सपत्नान्प्रणुदामारातीस्तपसि सर्वं प्रतिष्ठितं तस्मात्तपः परमं वदन्ति [4]दमेन दान्ताः किल्बिषमवधून्वन्ति दमेन ब्रह्मचारिणस्सुवरगच्छन्दमो भूतानां दुराधर्षं दमे सर्वं प्रतिष्ठितं तस्माद्दमः परमं वदन्ति [5]शमेन शान्ताश्शिवमाचरन्ति शमेन नाकं मुनयोऽन्वविन्दञ्छमो भूतानां दुराधर्षं शमे* सर्वं प्रतिष्ठितं तस्माच्छमः परमं वदन्ति [6]दानं यज्ञानां वरूथं दक्षिणा लोके दातारं सर्वभूतान्युपजीवन्ति दानेनारातीरपानुदन्त दानेन द्विषन्तो मि-

[2—7]सत्येनेत्यादयः श्लोकाः सुबोधाः। ब्रह्मण्येव सत्ये प्रतिष्ठितं सर्वं तदधीनस्थितित्वात्। तस्मात्सत्यं परमं तपो वदन्ति भगवन्तः। एवं सर्वत्र। दानान्ताः ब्रह्मचर्यादिभिः क्लिष्टाः। दमो दुराधर्षं तपः। दमः परममिति। द्वितीयायास्स्वादेशः। एवं शमः परममिति। दुराधर्षंछम इति छकारं पठन्ति केचित्। स तु वर्णव्यत्ययः। दानमिति। यज्ञानां वरूथं गृहस्थस्थानीयं दानम्। दाने हि यज्ञास्तिष्ठन्ति तदधीनसिद्धिकत्वात्। तत्कथ-

*धर्षञ्छमे

त्रा भवन्ति दाने सर्वं प्रतिष्ठितं तस्माद्दानं परमं वदन्ति [7]धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति धर्मेण पापमपनुदति धर्मे सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्ति [8]प्रजननं वै प्रतिष्ठा साधु प्रजायास्तन्तुं तन्वानः पितृणामनृणो भवति तदेव तस्यानृणं तस्मात्प्रजननं परमं वदन्त्य[9]ग्नयो वै त्रयी विद्या देवयानः पन्था गा-

---

मिति चेदाह—**दक्षिणा** हि दानम् । तदभावे कुतो यज्ञः । यद्वा—यज्ञानां वरूथभूता या दक्षिणा सा हि दानम् । **दानेन** शत्रूनपनुदन्ते शत्रवोपि **मित्रा भवन्ति** दानप्रभावेन ॥

[8]**प्रजननं** अपत्यं **प्रतिष्ठा** स्थितिहेतुरन्वयस्य । कोऽर्थोऽन्वयेन इति चेत् ब्रूमः—**साधु** समीचीनं शास्त्रेण विधिना **प्रजायास्तन्तुं** सान्तत्यमविच्छेदं **तन्वानः पितृणामनृणो भवति** आनृण्यं गतो भवति । 'प्रजया पितृभ्यः'* इति यदृणं भवति **तदेव** हि प्रजननं **तस्य** प्रजाख्यमृणं पितृभ्यो धारयतः पुरुषस्य अनृणत्वहेतुः। नान्येन तृप्यन्त्युत्तमर्णाः पितर इति भावः ॥

[9–10]**अग्नयो** गार्हपत्यादयः । ते स्वयं **त्रयी विद्या** तया सर्वथाऽपि तेषां प्रतिपाद्यत्वात् । किंच—यागसाधनद्वारेण देव-

---

*सं. ६-३-१०.

र्हपत्य ऋक्पृथिवी रथन्तरमन्वाहार्यपचनो यजु-
रन्तरिक्षं वामदेव्यमाहवनीयस्साम सुवर्गो लोको
बृहत्तस्मादग्नीन्परमं वदन्[10]त्यग्निहोत्रꣳ सायंप्रात-
र्गृहाणां निष्कृतिस्स्विष्टꣳ सुहुतं यज्ञक्रतूनां प्राय-
णꣳ सुवर्गस्य लोकस्य ज्योतिस्तस्मादग्निहोत्रं प-
रमं वदन्ति [11]यज्ञ इति यज्ञो हि देवानां यज्ञेन हि
देवा दिवं गता यज्ञेनासुरानपानुदन्त यज्ञेन द्विष-
न्तो मित्रा भवन्ति यज्ञे सर्वं प्रतिष्ठितं तस्माद्यज्ञं
परमं वदन्ति [12]मानसं वै प्राजापत्यं पवित्रं मान-

त्वप्राप्तिहेतुः मार्गः । किञ्च—तेषां मध्ये **गार्हपत्य ऋ**गादित्रयं **अन्वाहार्यपचनो** दक्षिणाग्निः **यजु**रादित्रयं **आहवनीयस्सामा**दि-त्रयं तेनोत्पद्यते । 'यदृक्तो यजुर्भ्रेष आगच्छेद्भूरिति गार्हपत्ये जुहुयात्' इत्यादि । **अग्निहोत्रं गृहाणां निष्कृतिः** गृहसम्ब-न्धिनां पापानां शोधनं **स्विष्टं सुहुतं** यागहोमयोः शोभनत्वहेतुः। **यज्ञक्रतूनां** यूपवतां यज्ञानां ज्योतिष्टोमादीनामपि **प्रायणं** प्रारम्भः तेऽप्यनेन विना न स्युः। **सुवर्गस्य लोकस्य ज्योतिः** द्योतकं प्रदीपवत्प्रकाशकम् ॥

[11]यज्ञेन हीत्यादि गतम् ॥

[12]मानसमिति ॥ "मनो वै प्रजापतिः"* इति प्रजापत्यात्मनि मनसि

*ब्रा. ३-७-१.

सेन मनसा साधु पश्यति मानसा ऋषयः प्रजा असृजन्त मानसे सर्वं प्रतिष्ठितं तस्मान्मानसं परमं वदन्ति [13]न्यास इत्याहुर्मनीषिणो ब्रह्माणं ब्रह्मा विश्वः कतमस्स्वयंभुः प्रजापतिस्संवथ्सर इति [14]संवथ्सरोऽसावादित्यो य एष आदित्ये पुरुषस्स प-

भवं वैराग्यलक्षणं तपः **प्राजापत्यं पवित्रं** प्रजापतेः स्वभूतं अत एव चातिशयेन पवित्रं **मानसेन** विद्यमानेन हेतुना पुरुषो **मनसा साधु** समीचीनं **पश्यति** । असति हि तस्मिन् अस्थानविक्षिप्तं मनस्स्यात् । **मानसा ऋषयः** प्रजापतेर्मनसि भवाः मरीच्यादयः **प्रजाः** सृष्टवन्तः । **तस्मादिदमपि मानसं** तद्वत् प्रशस्तमिति भावः ॥

[13]न्यास इति ॥ स्वयं **ब्रह्माण**मेवाहुः तद्वत्प्रशस्तं **न्यासमाहुः मनीषिणः** ईश्वराः वश्येन्द्रियाः । कीदृशो **ब्रह्मे**त्याह—**ब्रह्मा** नाम **विश्वः** विश्वाण्डशरीरः* **कतमः** अशक्यनिर्धारणः **स्वयम्भुः** स्वयमेव भवति । परं ब्रह्म तदेव **प्रजापतिः** प्रजानां पाता उत्पादयिता **संवत्सरः** सम्यग्वसन्त्यनेन भूतानीति । एवंगुणो ब्रह्मा ॥

[14]अथास्य संवत्सरस्वभावरूपं कीदृशमित्याह—**असावादित्यः** मानसानामादाता† मण्डलं ब्रह्माण्डशरीरस्य वैश्वानरस्थानीयं अनेन प्रकाशोदकदानादिना भूतानि वसन्ति । अथात्र मण्डले **यः पुरुषः** चेतनः **स परमेष्ठी** परमे जगद्रक्षणभावे स्थितः आत्मा हिरण्यगर्भः

*विश्वात्मशक्तिशरीरः.

†मासानामाधाता.

रमेष्ठी ब्रह्मात्मा [15]याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति पर्जन्येनौषधिवनस्पतयः प्रजायन्त ओषधिवनस्पतिभिरन्नं भवत्यन्नेन प्राणाः प्राणैर्बलं बलेन तपस्तपसा श्रद्धा श्रद्धया मेधा मेधया मनीषा मनीषया मनो मनसा शान्तिश्शान्त्या चित्तं चित्तेन स्मृतिꣳ स्मृत्या स्मारꣳ

---

क्षेत्रज्ञः । यद्वा—स परमेष्ठी हिरण्यगर्भक्षेत्रज्ञः कीदृशः **परब्रह्मात्मा** परमात्मा च स पुरुषः उभयोरुपलब्धिस्थानत्वात् ॥

[15]अथायं मण्डलात्मा कथं जगति वासयतीत्याह—याभिरादित्य इत्यादि ॥ **रश्मिशब्द** उभयलिङ्गो द्रष्टव्यः । प्राणान्ता गताः । **बलं** कार्यकरणसामर्थ्यं **तपो** यमानियमादिः **श्रद्धा** औत्सुक्यं **मेधा** बुद्धिप्रकर्षः **मनीषा** मनस ईशा वश्येन्द्रिया बुद्धिरेव । **मनः** अवलिप्तम् । स्वाभिमतसंपादकं **शान्ति**रूपं उपशमः । अतद्व्यावृत्तिः **चित्तं** स्वाभिमतालम्बनप्रतिष्ठं मनस्तत्त्वान्तरं वा भवतीति । एवं सर्वत्र । **स्मृतिः** अनुभूतवस्तुध्यानं तां चित्ते **वेदयाति** वेदयते अनुभवति । विद चेतनादिषु । चुरादिरनुदात्तेत् व्यत्ययेन परस्मैपदम् । अथ **स्मृत्या स्मारं** वेदयते अनभिभूता*र्थस्मृतिभवं वैराग्यं **स्मारं** मानसमिति यदुक्तम् । स्मारयतीति स्मरं मनः । तत्र भवः स्मारः उत्सादिर्द्रष्टव्यः । **स्मारेण विज्ञानं** वेदयते । विलक्षणज्ञानं **विज्ञानम्** । यत्र सर्वदार्ढ्यं†

---

*अनभिमता. †सर्वं त्याज्यं.

स्मारेण विज्ञानं विज्ञानेनात्मानं वेदयति तस्मा-दन्नं ददन्थ्सर्वाण्येतानि ददा[16]त्यन्नात्प्राणा भवन्ति भूतानां प्राणैर्मनो मनसश्च विज्ञानं विज्ञानादान-न्दो ब्रह्मयोनि[17]स्स वा एष पुरुषः पञ्चधा पञ्चात्मा येन सर्वमिदं प्रोतं पृथिवी चान्तरिक्षं च द्यौश्च दिशं-श्चावान्तरदिशाश्च स वै सर्वमिदं जगत्स च भूतꣳ स

---

पश्यति न्यासमित्यर्थः । अथ **विज्ञानेनात्मानं** वेदयते । एवं न्यासा-दात्मप्राप्तिरुक्ता । अत्र च उक्तेन क्रमेण प्राणादेराध्यात्मिकवर्गस्य **अन्नं** लिङ्गं कारणमुक्तम् । तत्र प्रसङ्गादन्नं स्तौति यस्मादेवं महानु-भावमन्नं तस्मात् तत् **ददन् सर्वाणि** प्राणाद्यात्मान्तानि **ददाति** व्यत्ययेन नुम् । यद्वा—दद दाने व्यत्ययेन परस्मैपदम् ॥

[16]अथान्नस्य प्रकारान्तरेण स्तुतिं करोति—अन्नादिति ॥ **भूतानां** प्राणमयादयः आनन्दमयान्ताः **अन्नात्** अन्नमयात् **भवन्ति** । उक्ताश्चैते 'तस्माद्वा एतस्मादन्नरसमयात्'* इत्यत्र । **ब्रह्मयोनिः** ब्रह्मप्राप्तिहेतुः ॥

[17]स वा इत्यादि पुरुषस्तुतिः । स **एष** मण्डलान्तर्गतः परमपुरु-षः **पञ्चधा** पञ्चप्रकारः अन्नमयाद्यानन्दमयान्तात्मकपञ्चकभावेन वर्तते । तथा **पञ्चात्मा** पृथिव्यादिपञ्चभूतरूपः जगदनुग्रहाय वर्तते । तस्मात्सर्वं चेतनाचेतनात्मकं सममेव दर्शयितुमस्य—येनेति।

---

*अत्रैव(४०)पत्रे.

**भव्यं** [18]**जिज्ञासक्लृप्त ऋतजा रयिष्ठाश्श्रद्धा सत्यो महस्वान्तमसोपरिष्टाद्ज्ञात्वा तमेवं मनसा हृदा च भूयो न मृत्युमुपयाहि विद्वान्तस्मान्न्यासमेषां त-**

गतम् । सर्वतो व्याप्तं **प्रोतं भव्यं** भवत् उपलक्षणत्वात् भविष्यच्च **सर्वं स** एव ॥

[18]जिज्ञासक्लृप्त इति त्रैष्टुभश्श्लोको ब्राह्मणमेव ॥ **जिज्ञासक्लृप्तः** क्लृप्तजिज्ञासः ब्रह्मजिज्ञासाधिकरणक्लृप्तसंपत्तिमान् । पदयोः स्थान-विनिमयस्ससस्वरयोः । जिज्ञासया वा सम्पन्नः । ऋतं यज्ञः आत्मयजनं तत्रैव जात इति **ऋतजाः** । "जनसन" इति विट् । "विड्वनोर-नुनासिकस्यात्" इत्यात्वम् । **रयिष्ठाः** यदुक्तं* ज्ञानं सांन्यासिकं तद्रयिः धनं तत्र तिष्ठतीति । "स्थः कच" इति क्विप् । **श्रद्धा** श्रद्धानम् । दधातेः 'क्विप्च' इति क्विप् । **सत्यः** ब्रह्मीभूतः सर्वात्मभा-वनाशीलः **महस्वान्** प्रकाशात्मा **तमस उपरिष्टात्** अज्ञानमतीत्य उ-परिस्थितः । यलोपासिद्धिमनादृत्य गुणः कृतः । 'सुपां सुलुक्' इति वा आकारः षष्ठ्यर्थे वा तृतीया । **एवं** उक्तप्रकारं **मनसा** अ-न्तःकरणेन **हृदा** भावनया **च तं** कालपुरुषं **ज्ञात्वा विद्वान्**† पदवा-च्यस्सन् **भूयो मृत्युं नोपयाहि** नोपयायात्‡ मृत्युं मारयावा [मृत्युः प्रमाद एव] । एवं विद्वान् मृत्युं नोपयाति 'जातस्य हि ध्रुवो मृत्युः'§ इति अस्मिन् देहे सति पुनर्मृत्युं नोपयाति, सामर्थ्यात् जन्मापि । तदिदं भूयश्शब्देन दर्शितम् । **तस्मात्** मुक्तिसाधनत्वात् **न्यासं** एव **एषां** सत्यादीनां **तपसामतिरिक्तं** प्रकृष्टं **आहुः** तत्त्वविदः ॥

*यदुत्तमं.    † विद्वान् भवन्.    ‡ नोपयाम.    §भगव. २-२७.

पंसामतिरिक्तमाहुः । [19]वसुरण्वो विभूरसि प्राणे त्वमसि संधाता ब्रह्मन्त्वमसि विश्वसृक्तेजोदास्त्वमस्यग्नेर्वर्चोदास्त्वमसि सूर्यस्य द्युम्नोदास्त्वमसि चन्द्रमस [20]उपयामगृहीतोऽसि ब्रह्मणे त्वा महस ओ-

[19]अथ विदुषो* मन्त्रः—वसुरण्व इति अति जगती षट्पदा यजुरन्ता ॥ **वसुरण्वः** वसुनो वरिष्ठस्य ज्ञानस्य ब्रह्मभावलक्षणस्य रणयिता गमयिता त्वमसि हे युञ्जान! आत्मन्! । रवि गतौ, इदित्त्वान्नुम् । **विभूः** व्यापकः **प्राणे** ब्रह्मणः सन्धाता त्वमसि इतरनिवृत्त्या हे **ब्रह्मन्**! परिवृढ! **विश्वसृक्** विश्वस्य भर्ता† विश्वत्रावस्थितः । क्विप् । विश्वस्य स्रष्टा वा । छान्दसोऽन्त्यविकारः सृजेः । **अग्नेः** अपि तेजसो दाता त्वमसि तेजोहेतुः त्वमग्नेरसि त्वदीयेन तेजसा अग्निस्तेजस्वी भवति । **सूर्यस्य** वर्चोदास्त्वमसि त्वदीयेन तव बलेन सूर्यस्तपति । **चन्द्रमसो** द्युम्नोदास्त्वमसि त्वत्सम्बन्धेन सोऽन्नवान् द्युतिमान् वा भवति । असुगागमश्छान्दसः ।

[20]अथ यजुः—**उपयामगृहीतः** सोमः स त्वं असि । त्वमेवाहमिति युक्तोऽस्मीत्येवं ध्यानकाले **आत्मानं युञ्जीत** समादधीत मुमुक्षुः **एतत्** हि **महोपनिषदं** ज्ञानं महती प्रशस्ता उपनिषीदन्त्यास्य इत्युपनिषद्वचो या सा महोपनिषत् तद्वत् ज्ञानं तत्प्रतिपाद्यं महोपनिषदम् । मत्वर्थीयोकारः । **देवानां** सम्बन्धि देवा यत्राधिक्रियन्ते **गुह्यं** गूहयन्ति यद्देवा मनुष्यादयो मा वेदिषुरिति तादृशमिदं ज्ञानमुक्तम् । **एवं** वेदिता **ब्रह्मणः** परमात्मनः **महिमानं** महत्त्वं

* 'अथ विट्' 'अथ त्वमर्थो' इति च पाठौ. † द्रष्टा.

मित्यात्मानं युञ्जीतैतद्वै महोपनिषदं देवानां गुह्यं य एवं वेद ब्रह्मणो महिमानमाप्नोति तस्माद्ब्रह्मणो महिमानमित्युपनिषत् ॥ ७१ ॥ ६३ ॥

---

[1]तस्यैवं विदुषो यज्ञस्यात्मा यजमानश्श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदश्शि-

---

माप्नोति । ततः तस्मात् एव कारणात् ब्रह्मणः परस्य च महिमानमाप्नोति । केचित्तु विद्यासमाप्तिसूचनार्था आवृत्तिरित्याहुः । तदा द्वितीयेऽप्याप्नोतीत्यनुषज्येत, तदा तस्मादित्यनेन नार्थः । इत्युपनिषदिति व्याख्यातमेव ॥

इति त्रिषष्टितमोऽनुवाकः.

---

[1]एवं ज्ञानादमृतत्वप्राप्तिवचनात् नित्यकर्मणामानर्थक्यं प्राप्तम् । तन्मा भूदिति नित्यकर्मापरित्यागसूचनार्थं ज्ञानमेव यागात्मना वर्ण्यते—तस्यैवमित्यादि ॥ तस्य संन्यासिनः एवंविदुषः विभावितात्मसत्यत्वस्य सम्बन्धी यो यज्ञः ज्योतिष्टोमादिर्नित्यः तस्य आत्मैव यजमानः स्वरूपेणैव विद्वान् यजमानः न तु याजमानैर्धर्मैः । तदीया श्रद्धा एव पत्नी सर्वत्र सहकारित्वात् । तदीयं शरीरं इध्मं अग्न्यावाधेयत्वात् । तदीयं उरो वेदिः अभिप्रेतानामर्थानां स्थानत्वात् । लोमानि बर्हिः स्तीर्णत्वात् । तदीया शिखा वेदः बद्धत्वात् । तत एव ज्ञायते शिखादिकमस्यात्याज्यमिति । हृदयं यूपः उच्छ्रितस्वभावत्वात् । कामः

खा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्नि-
र्दमः शमयिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षु-
रध्वर्युर्मनो ब्रह्मा श्रोत्रमग्नीद्यावद्ध्रियते सा
दीक्षा यदश्नाति यत्पिबति तदस्य सोमपानं यद्र-
मते तदुपसदो यत्संचरत्युपविशत्युत्तिष्ठते च स
प्रवर्ग्यो यन्मुखं तदाहवनीयो यदस्य विज्ञानं

इच्छा स आज्यं उद्दीपनत्वात् । इदमेव ज्ञापकं कामनिवृत्ता-
वपि ज्ञानादपवर्ग इति । **मन्युः** क्रोधः स **पशुः** सवनीयत्वात् ।
**तपो** यमनियमादिः तदस्य **अग्निः** गार्हपत्यादियागसाधनत्वात् ।
**शमयिता** संस्कर्ता भोज्यानां सा **दक्षिणा** तृप्तिहेतुत्वात् । तदीया
**वाक्** शब्दः सा **होता** हौत्रस्य वाग्भूयिष्ठत्वात् । **प्राणः** बलं
स **उद्गाता** बलकार्यत्वात् गानस्य । **चक्षुरध्वर्युः** तदधीनत्वात्
सर्वव्यापाराणाम् । **मनो ब्रह्मा** सर्वत्र साक्षित्वात् प्रवर्तयितृ-
त्वाच्च । **श्रोत्रमग्नीत्** 'अन्तरिक्षमिवाग्नीध्रम्'* इति शब्दसम्बन्धि-
त्वात्[1] । **यावत् ध्रियते** जीवति **सा दीक्षा** देहशोधनत्वात् ।
**यत्** अयं **अश्नाति यत्** च **पिबति** अन्नमुदकं च **तदस्य**
**सोमपानं** दिनेदिने परमसौहित्यहेतुत्वात् । **यद्रमते** ध्यानादौ
**तदुपसदः** प्रतिदिवस[2]द्वारत्वात् । संचरणोपवेशनोत्थानादिर्यः **स**
**प्रवर्ग्यः** तपोरूपत्वात्, प्रवर्ग्येऽपि तेषां सद्भावात् । **यन्मुखं** आस्यं
स **आहनीयः** हविषां प्रक्षेपस्थानत्वात् । **यदस्य विज्ञानं** तृप्तिज्ञानं
**तत् जुहोति** होमस्थानीयम् । **यत्** अस्य कालत्रयं **प्रातर्मध्यन्दिनं**

*तं. ५-४-६. [1]सम्बन्धित्वाद्वायोः. [2]दिवसति.

तज्जुहोति यथ्सायं प्रातर्मध्यन्दिनं च तानि सवनानि ये अहोरात्रे ते दर्शपूर्णमासौ येऽर्धमासाश्च मासाश्च ते चातुर्मास्यानि य ऋतवस्ते पशुबन्धा ये संवथ्सराश्च परिवथ्सराश्च तेऽहर्गणास्सर्ववेदसं वा एतथ्सत्त्रं यन्मरणं तदवभृथ एतद्वै जरामर्य-

---

**सायमिति तानि सवनानि** प्रातस्सवनादीनि सवनत्रयसम्बन्धात् कालत्रयसम्बन्धात् । **अहोरात्रे दर्शपूर्णमास**स्थानीये । **अर्धमासा**दीनि **चातुर्मास्य**स्थानीयानि अक्षयफलसाधनवृत्तित्वात् । **ऋतवो** वसन्तादयः **ते पशुबन्ध**स्थानीयाः लोकाभिजयसाधनत्वात् । **संवत्सराः परिवत्सराश्च अहर्गणाः** द्विरात्रादिस्थानीयाः* अहस्संघातरूपत्वात् । अथ **एतत्** अस्य यजमानस्य संबन्धि **यत्सर्ववेदसं** सर्वं धनं शरीरं शरीरावयवाः शरीरोपकरणानि च तदस्य **त्रयं सत्रं** सत्रयागस्थानीयं श्रेयस्साधयितुं सहप्रवृत्तत्वात् । स्वयं गृहपतिस्थानीयः सर्वं वेदः सर्ववेदसम् । 'अनसन्तान्नपुंसकात्' इत्यच् समासान्तः । यद्वा—सर्ववेदसदक्षिणा साऽस्य जीवनं एतत्सर्वार्थविलोपफलत्वात् । अथास्य **यन्मरणं** प्राणत्यागः **तत्** अस्य यज्ञस्य **अवभृथः** समाप्तिरूपत्वात् । किं बहुना **एतत्** अस्यात्मयाजिनो **जरामर्यमग्निहोत्रं** जरया वयोहान्या म्रियते सन्तिष्ठते इति जरामर्यं मरणान्तमग्निहोत्रस्थानीयं देवताराधनरूपत्वात् । **सत्रं** सत्रतुल्यं सदाऽपि त्रायकम् । सदो वा त्रायकम् ॥

---

*"द्वितीययुगपरिवत्सरादयः" इत्यधिकं क्वचित्.

मग्निहोत्रꣳ सत्तं १य एवं विद्वानुदगयने प्रमीयते देवा-
नामेव महिमानं गत्वाऽऽदित्यस्य सायुज्यं गच्छत्य-
थ यो दक्षिणे प्रमीयते पितृणामेव महिमानं गत्वा
चन्द्रमसस्सायुज्यं गच्छत्येतौ वै सूर्याचन्द्रमसो-
र्महिमानौ ब्राह्मणो विद्वानभिजयति तस्माद्ब्रह्मणो
महिमानमाप्नोति तस्माद्ब्रह्मणो महिमानमित्युप-
निषत् ॥ ८० ॥ ६४ ॥

अम्भस्यपारे भुवनस्य मध्ये ... अभ्भ्रंसि भूरग्नये भूरन्नं भूरग्नयै च पाहि नो
यश्छन्दसां नमो ब्रह्मण ऋतं तपो यथा वृक्षस्या-
णोरणीयान्त्सहस्रशीर्षमृतमादित्यो वा एष आदि-
त्यो वै तेज ओजो घृणिस्सर्वो वै कद्रुद्राय नमो
हिरण्यबाहवे यस्य वैकङ्कती कृणुष्व पाजोऽदिति-
रापो वा इदमापः पुनन्त्वग्निश्च सूर्यश्चायातवो भूरों
भूर्भुवस्सुवरों तद्ब्रह्म ओमन्तश्चरत्यमृतोपस्तरणं
प्राणे निविष्टः प्राणे निविष्टोऽशिवोऽमृतापिधानꣳ

१य एवमित्यादि ॥ ज्ञापकं चैतत् न स्वेच्छया त्यक्तव्याः प्राणा
इति । एवं आत्मवित् । य एवं विद्वानुदगयन इत्यादि गतम् । द्वौ
एतौ एव सूर्याचन्द्रमसोः महिमनौ ब्राह्मणः आत्मवित् प्रथममेतौ
महिमानावभिजित्य तस्मात् एव कारणात् ब्रह्मणः परमात्मनो म-

श्रद्धायां प्राणे निविश्य प्राणानामङ्गुष्ठमात्रो मेधा देवी मेधां म इन्द्रो ददात्वप्सरास्त्वामो मेधा सद्यो वामदेवायाघोरेभ्यस्तत्पुरुषायेशानो ब्रह्म मेतु ब्रह्म मेधया ब्रह्म मेधवा प्राणापान वाङ्मनश्शिरःपाणि त्वक्कर्म शब्दस्पर्श पृथिव्यन्नमय विविड्ढि घृषोत्का-योत्तिष्ठो ऽ सत्यं प्राजापत्यस्तस्यैवं चतुष्षष्टिः॥६४

अम्भसि वृषा हꣳसस्सर्वो वा आयातु

श्रद्धायां तत्पुरुषाय शब्दाशीतिः॥८०॥

हरिः ओम् श्रीकृष्णार्पणमस्तु.

---

हिमानमाप्नोति । ततः तस्मादेव कारणात् परस्य ब्रह्मणो महिमानमाप्नोति । एवं समाप्तिसूचनार्था वाक्यावृत्तिः । ब्राह्मणग्रहणं प्रदर्शनार्थं—सर्वोपि तद्विद्वानाभिजयति । इत्युपनिषदिति व्याख्यातमेव ॥

---

इति चतुष्षष्टितमोऽनुवाकः.

---

इति याज्ञिक्युपनिषत्समाप्ता.

इति तैत्तिरीयारण्यके षष्ठप्रपाठकः.

# अशुद्धशोधनम्.

| पुटे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| १ | ३ | फलश्रुतिरर्थवाद | फलश्रुतिरियमर्थवाद |
| ,, | ४ | परार्थत्वाभावात | परार्थाभावात् |
| ,, | ९ | स्तुतिः | श्रुतिः |
| ,, | १२ | क्रतूपकारकत्व | कर्त्रुपकारकत्व |
| २ | ७ | 'अपितरि पितरं | अपितरि 'पितरं |
| ४ | १३ | इति | इति प्रतिपादनार्थं |
| ,, | १४ | ऐकमत्यं | ऐकश्रुत्य |
| ६ | ८ | स्वरनिबन्धनत्वात् | बलनिबन्धनत्वात् |
| ८ | ४ | द्योतयत् | द्योतयन् |
| ,, | १२ | अधिलो- | लोके अधिलो- |
| ४० | ,, | अत्मा | आत्मा |
| ८८ | १३ | तादृशीं | तां तादृशीं |
| १०८ | ६ | महीयान्- | महीयान् |
| ११८ | १३ | कर्मणाऽऽ | कर्मणाऽऽ- |
| १२१ | ९ | वृत्तिकारणात् | वृत्तिकान्मरणात् |
| १२२ | १५ | भवतीति । तदुक्तम्— | भवतीति ॥ [24]उक्तम्— |
| ,, | १६-१७ | इति ॥ [24]तत्र | इति । तत्र |
| १२३ | १० | स प्र- | सः तत्प्र |
| ,, | १७ | प्रपञ्चवाद्यं | प्रपञ्चवत्यां |
| १२४ | ,, | नराणां गन्तव्यम् | नराणां अयनं गन्तव्यम्. |